मध्यमाः स्थायिनः सन्ति नेति चेन्मध्यमानुगाः ।
ग्रहाश्चतुष्कर्मवन्त इति यत्तन्निराकृतम् ॥ २९ ॥

मध्यशीघ्रार्धमन्दार्धफलमेति तदाश्रयैः ।
उपग्रहैश्चापकृष्टा मन्दोच्चैश्च ग्रहा ययुः ॥ ३० ॥

इति चेन्मन्दभागे च नैवाकस्मादुपग्रहाः ।
युज्यन्ते ते प्रकृष्टाश्चेदपकृष्टा ग्रहाश्च तैः ॥ ३१ ॥

इति चत्वारि कर्माणि ग्रहस्यैव न तन्मतम् ।
उपग्रहापकर्षेऽपि पूर्वमेवेदमुच्यते ॥ ३२ ॥

अतो मन्दार्धशीघ्रार्धा न सन्तीति हि नोच्यते ।
असत्वेऽन्यतरस्यापि ग्रहयोरर्धसंज्ञयोः ॥ ३३ ॥

एकापकर्षणं कल्प्यं ग्रहस्यापि तथा पुनः ।
उपग्रहा न सन्तीति यदि ब्रूयाच्चतुष्टयम् ॥ ३४ ॥

कर्मणां स्याद्ग्रहस्यैव सन्ति तस्मादुपग्रहाः ।
अर्धाख्येनापकृष्टश्चेन्नोच्चैर्नीचैर्यथा तथा ॥ ३५ ॥

उपग्रहोऽपकृष्टः स्यात्सग्रहस्तेन चेदिति ।
नैवमर्धग्रहस्थानज्ञानमेव तथोच्यते[1] ॥ ३६ ॥

स्वच्छन्दगमनं तद्धि किं तूच्चैरुच्चनीचता ।
अर्धाख्यस्त्वपकृष्टश्चेदपकृष्ट उपग्रहः[1] ॥ ३७ ॥

ग्रहश्चाप्यपकृष्टः स्यात्तदभावान्न तद्भवेत्[1] ।
विक्षेप्यौ च न चेद्धर्मौ पाताभ्यां शुक्रचन्द्रजौ ॥ ३८ ॥

31 *d*) Ba. ते
36 *d*) M. मथोच्यते — 1) This line is missing in S.
37 *c*) Ba. - ख्येनो — 1) This verse is missing in S,
38 1) This line is missing in S.



विक्षेप्यौ स्तांतथा क्षेपलिप्ताश्चेन्न स्फुटास्वदिक् ।
अपकृष्टैर्ग्रहैः साकं कर्षका यान्ति यत्ततः ॥ ३९ ॥

तेऽपकृष्टाः स्वमन्दोच्चैः पातास्तैश्च ततः फलम् ।
तृतीयमपि पातानां ग्रहवन्नेति कल्प्यताम् ॥ ४० ॥

तस्मान्मन्दार्धमन्दोच्चमध्ये यावदुपग्रहः ।
याति यद्दिशि तावत्येवास्ते तद्दिशि मध्यमात् ॥ ४१ ॥

स्वच्छन्दगः कर्षकस्तु क्षेपश्चलनमन्यथा ।
शीघ्रोच्चावेव शीघ्राख्यौ बुधशुक्रौ न चेतरौ ॥ ४२ ॥

इति चेत्तादृगुच्चाभ्यां ग्रहस्थानं च बुध्यताम् ।
याम्योत्तरगती यद्वदुत्क्रमाद्भास्करस्य च ॥ ४३ ॥

तथैवानपकृष्टानां गतेराधिक्यमल्पता ।
ग्रहकर्षकवद्वस्तु किं न चेदित्युपग्रहैः ॥ ४४ ॥

स्वच्छन्दगमने तेषां मन्दोच्चाः कल्पिता वृथा ।
मृषावादी च वेदः स्यात्तत्सर्वानर्थकारणम् ॥ ४५ ॥

मन्दार्धायो यद्दिशि च याति तन्मध्यमो ग्रहः ।
यावन्ति कल्पे मन्दार्धा यो गच्छेत्सोऽप्युपग्रहः ॥ ४६ ॥

स नास्ति यस्य गमनं कल्पजं गमनं न च ।
मन्दस्फुटा द्रोमशे हि सोमे च क्षेपसाधनम् ॥ ४७ ॥

39 *a*) Ba. तौ
40 *a*) Ba. मन्दाद्यैः
42 *b*) $D_1$. - स्खलन
43 *a*) Ba. चैता
*d*) Be. M. $D_1$. $D_2$. $B_1$. $B_2$. An. अकस्मात्
44 *d*) Ba. ग्रहे
45 *a*) Ba. - गमनं — *b*) Ba. - कथिता
46 *c*) Be. $D_1$. S. यातीति — *d*) $D_1$. $D_2$. S. $B_1$. $B_2$. An. - थो
47 *a*) Be. - सदास्ति कस्य
*d*) Be. M. $D_1$. $D_2$. S, $B_1$. $B_2$. An. - सौम्ये

कीर्तितं तत्कर्षकाः स्युर्न सम्बन्धान्तरं क्रमात् ।
सूर्यरोमशसोमेभ्यो यथा लब्धग्रहा इह ॥ ४८ ॥

कल्पिताः स्युः स-नामानो भिन्नसंज्ञास्तथैव च ।
मन्दापकृष्टैर्मन्दाख्या ग्रहैर्देवा ययुः सह ॥ ४९ ॥

विक्षिप्यन्ते च पातैस्तैस्ते ग्रहा इति कल्प्यताम् ।
इति चेत्कर्षकाणां तु प्रोक्तं नामान्तरं भवेत् ॥ ५० ॥

त्यक्तं श्रुतिकृतं नाम नैतदप्यस्ति पौलिशे ।
ग्रहैः कृतं यत्तत्पाते कृते नेति च वर्तते ॥ ५१ ॥

सोमरोमशयोः पाताः शोध्या मन्देभ्य ईरिताः ।
शुक्रज्ञपातयोर्वामक्रमणं सूर्य कीर्तितम् ॥ ५२ ॥

तृतीयेऽस्य न चेदिष्टं तत्तत्राप्यस्ति दूषणम् ।
श्रुत्यन्तरविरोधस्तु पौलिशेऽत्र च गम्यते ॥ ५३ ॥

तद्वास्य गमनं तावन्निर्णीतं च सहेतुकम् ।
उपग्रहनिमित्तं वा न तावत्प्रथमक्रमः ॥ ५४ ॥

यथेष्टकल्पनापत्तेर्द्वितीयः कल्प एव चेत् ।
पातमन्दोच्चमध्येन फलं साध्यं न तन्मतम् ॥ ५५ ॥

कल्पस्तृतीयश्चेदुच्चैर्नापकृष्ट उपग्रहः ।
अश्वेनेव रथं पातमाकर्षति न वा स तम् ॥ ५६ ॥

48 *b*) Be. M. $D_2$. $B_1$. $B_2$. ध्रुवे
49 *a*) Ba. – स्वनामादौ
51 *d*) M. $D_2$. $B_1$. $B_2$. विवर्तते
52 *a*) Be. M. S. $B_1$. $B_2$. सौम्य *c*) M. $D_2$. $B_1$. $B_2$. शुक्रेन्दु
53 *a*) S. – यार्धेन
55 *d*) S. नार्धेन
56 *ab*) $D_1$. S. An. दुच्चेनापकृष्ट
*c*) Be. M. $D_1$. $D_2$. $B_1$. $B_2$. An. रथः
*d*) M. $D_2$. $B_1$. $B_2$. वामतः



स्तम्भच्छाया दीपवच्चेन्न मन्दोच्चोऽत्र कारणम् ।
परस्परं भचक्रार्धपातोपग्रहसङ्करः ॥ ५७ ॥

वामं निष्कारणं यातीतीयं वा कल्पना सती ।
स्वोच्चादुपग्रहाद्वापि नाकस्माद्धि तदिष्यते ॥ ५८ ॥

सहेतुकं कल्प्यमानं कल्प्यते न तु हेतुकैः ।
मन्दोच्चैर्नापकृष्टस्तु यावद्व्रजति भास्करः ॥ ५९ ॥

तेनाकृष्टा ग्रहस्तावत्ते तथोपग्रहैर्ययुः ।
भृत्यैस्तत्क्रियते कर्म स्वामिना क्रियते हि यत् ॥ ६० ॥

प्रत्यक्प्राग्बहिरन्तर्वा तद्ग्रहोऽर्कसमं व्रजेत् ।
इति चेन्नैतदिष्टं स्याद्भोगादावधिकं नृपः ॥ ६१ ॥

सेवादावधिकं भृत्या वर्तन्ते न हि तत्समाः ।
यावान्यस्याधिकारः स्यात्तावत्तस्य प्रवर्तनम् ॥ ६२ ॥

सर्वचक्राधिपः सूर्य इयद्याति स्वभुक्तितः ।
इयद्यातीति युक्तिः स्याद्राजानुचरकल्पितः ॥ ६३ ॥

श्रुतिर्यत्र प्रमाणं स्याद्युक्तिः का तत्र नारद ।
जिज्ञासोर्युक्तिरिष्टास्ति यदि श्रुत्यनुसारिणी ॥ ६४ ॥

श्रुत्युक्तेष्टतरा युक्तिर्नान्यद्बाधेत यच्छ्रुतिम् ।
कृत्वादौ मन्दकर्मान्ते क्रियते शीघ्रकर्म यत् ॥ ६५ ॥

57 *c*) $D_1$. S. An. र्धे
58 *ab*) S. यातुरियं *c*) S. स्वतोवोप-
59 *a*) Ba कल्प *c*) Ba. Be. $D_1$. An. मन्दोच्चेनाप-
60 *a*) Be. M. $D_2$. $B_1$. $B_2$. तेनापकृष्टा ( This reading makes the line hypermetric )
61 *d*) Ba. नृपाः
62 *ab*) M. $B_2$. An. भृत्याः प्रवर्तन्ते न तैः समाः।
*c*) M. $D_2$. $B_1$. यावत्त-
*a*) Ba. सूर्यः *b*) Ba. कि-
*c*) M. $D_2$. S. $B_1$. $B_2$. An. कि

तस्मान्मन्दापकृष्टः प्राक् शीघ्रेणायोऽपकृष्यते ।
किञ्चित्किञ्चिद्विलम्ब्यैव इति चेदपकर्षति ॥ ६६ ॥

नैतदेवं यदेवं चेद्गतिर्नानाविधान्त्वहम् ।
बिम्बं च सममर्कस्य तद्वदेतदभावतः ॥ ६७ ॥

ननु बिम्बाल्पताधिक्यं खमध्ये क्षिपिजेऽन्वहम् ।
इति तु क्षितिजे ब्रह्माण्डांशवो न ह्यधो भुवः ॥ ६८ ॥

पूर्ण( ? ) कृष्णांशवस्तस्माद् दृशः प्रतिहते महत् ।
बिम्बं भूभाभिसंछन्नं खतवर्णं च दृश्यते ॥ ६९ ॥

असंमुखत्वान्मध्यात्स पार्श्वार्द्धं खखरत्वतः[1] ।
स्तोकस्तोकेन भूरश्मिह्रासे चण्डांशुदर्शनात् ॥ ७० ॥

दृष्टिप्रतिहते बिम्बं क्षीयमणमिते गते ।
आरात्खमध्ये चण्डांशुरश्मिः प्रागलभ्यते भुवः ॥ ७१ ॥

रश्म्यभावाच्च पादोनं क्षितिजादिव दृश्यते ।
त्रिभिश्चतुर्भिः क्षितिजे खमध्येऽथ कलाहृताः ॥ ७२ ॥

अङ्गुलानि भवन्त्यस्मादित्युक्तं हि महर्षिभिः ।
भूमिकक्षाचतुर्भागे स्वास्थितस्यात्मनस्तुयः ॥ ७३ ॥

क्षितिजस्थ खमध्यस्थ इत्येवासौ पुरोदितः ।
तिस्रश्चतस्रस्ता लिप्तास्तदानीमङ्गुलद्वये ॥ ७४ ॥

---

67 c ) Ba. शुद्धकर्मास्य
69 b ) M. $D_1$. $D_2$. S. $B_1$. $B_2$. – मेहत् c ) $D_1$. S. भूरश्मि
70 This line is missing in Be. M. $D_2$. S. $B_1$. $B_2$.
71 b ) An. – वेक्षते d ) S. प्राबल्यतो
72 a ) S. रश्मि–
73 c ) Ba. – श्च d ) Ba. – खस्थित
74 d ) M. $D_1$. $D_2$. $B_1$. $B_2$. – मङ्गुलं दूयोः



दृश्यते महदेकेन बिम्बमन्येन वान्यथा ।
एकस्मिन्दिवसे तस्माद्विबाधिक्यालपता न हि ॥ ७५ ॥

त्रिचतुः कर्णयोगार्धं स्फुटकर्णोऽस्य मस्तके ।
ग्रहश्चरत्यतः किञ्चिद्विलम्ब्याकर्षणं न हि ॥ ७६ ॥

उच्चद्वयानुगुण्येन ग्रहो यद्यपि सञ्चरेत् ।
तथापि युगपत्कर्मद्वयं न क्रियते यतः ॥ ७७ ॥

तथा नीताग्रहास्तद्वद्दृश्यन्ते नैव वै ततः ।
उपदेशक्रमोऽप्येवं स च कर्मद्वयक्रमः[1] ॥ ७८ ॥

यावता सोऽधिकः कर्णस्तावतार्धेन तादृशी[1] ।
त्रिज्यातः स्फुटकर्णोऽपि नार्थसिद्धेः सवर्जितः[2] ॥ ७९ ॥

उपग्रहाणां यज्जातकक्षा सिद्धिर्ग्रहस्य तु ।
सुतरां मन्दशीघ्राख्ये कर्मणी कथिते क्रमात् ॥ ८० ॥

उच्चैर्नीचैर्व्रजन्तेवार्कानुरूपं समश्रवः ।
मध्यकर्णस्ततः कर्णान्तरत्वं याति तन्मुने ॥ ८१ ॥

अन्तरुन्नतवृक्षाश्च वनप्रान्तस्थिता इव ।
दूरत्वाच्चन्द्रकक्षायां दृश्यन्ते सकलास्तथा[1] ॥ ८२ ॥

---

76 d ) M. $D_2$. $B_1$. $B_2$. An. – लङ्घ्या –
77 d ) Be. – निष्क्रियते
78 M. $D_2$. S. $B_1$. $B_2$. –यं
1 ) This is the second line of 79 in all other texts except Ba.
79 d ) Ba – सिद्धविवर्जितः
1 ) This is the second line 78 in all texts other than Ba.
2 ) This is the first line of this verse in all texts other than Ba.
80 a ) S. कक्ष्यातः b ) –S. सिद्धे–
81 b ) M. $D_2$. $B_1$. $B_2$. क्षम d ) Ba. Be. M. $D_1$. S. An. यन्मुने
82 a b ) Ba. अन्तरे वनतोवृक्षावन्तप्रान्तेस्थिता इव ।
c ) M. या
1 ) This line is missing in $D_2$. $B_1$. $B_2$.

भौमार्किबुधजीवानां त्रिंशदम्भोधिवर्धिताः ।
विष्कम्भाश्चन्द्रकक्षायां षष्टिः शुक्रस्य कीर्तिताः ॥ ८३ ॥

त्रिज्याप्ताः स्फुटकर्णाप्ता विष्कम्भास्ते स्फुटाः ।
तिथ्याप्ता बिम्बलिप्ताः स्युरङ्गुलानि पुरोक्तवत् ॥ ८४ ॥

कक्षाश्च भगणामानं विधोरिच्छेतरस्य तु ।
विष्कम्भः फलमस्येति विष्कम्भः पारमार्थिकः ॥ ८५ ॥

तथार्कस्य स्वकक्षायां विष्कम्भः खखपञ्चषट् ।
षष्टिरष्टाहताराज्ञस्तथा बिम्बस्य नारद ॥ ८६ ॥

निजमण्डलविष्कम्भः स्वकक्षायां फलं विधोः ।
कक्षेच्छामानमन्या वा मानेच्छा भगणौ द्वयोः ॥ ८७ ॥

इतीन्दुमध्यकक्षायां विज्ञेयं बिम्बयोजनम् ।
कक्षा वा भगणा मानमित्येवेच्छाधिकेन तु ॥ ८८ ॥

अर्केन्दुमण्डलव्यासौ स्फुटभुक्तिहतौ तयोः ।
मध्यभुक्त्युद्धृतौ स्पष्टौ प्राग्वल्लिप्तास्तदङ्गुलम् ॥ ८९ ॥

दूरस्थत्वात्तु बिम्बस्य सौक्ष्म्यं स्थौल्यं प्रकाल्पितम् ।
लोकदृष्ट्या यथाद्रेः स्वस्थाने नित्यं समात्मनः ॥ ९० ॥

---

83 *d*) Ba. Be. $D_1$ कीर्तिता
The following verse appears in foot note of Ba and in text of all other mss. after 83 :-
व्यर्धाष्टवर्धितस्त्रिंशद्विष्कंभाः शास्त्रदृष्टितः ।
भौमार्किबुधजीवानां चन्द्रमार्गे तु नारद ॥
1) Compare सू. सि. VII 13
84 *b*) Ba. -स्तत्स्फुटाः
85 *a*) Be. M. $D_1$. $D_2$. $B_1$. $B_2$. An. कक्षा च
88 *d*) S. त्यत्रेच्छाधिकैव तु
90 *b*) Ba. प्रकीर्तितम्



अर्ककक्षेन्दुकक्षाप्ता सूर्याबिम्बश्रुतिर्यतः ।
इन्दुबिम्बश्रवाप्ताया क्रोशो नावा न वाततः ॥ ९१ ॥

अर्केन्दुकक्षा व्यासार्धे तद्विष्कम्भाववेहि ते ।
तन्मध्यभुक्तिगुणिते स्फुटभुक्त्युद्धृते स्फुटे ॥ ९२ ॥

भानोर्भार्धे महीच्छाया महत्वान्मण्डलस्य तु ।
अर्कस्य भूम्याः सूच्यग्रमानं शेषमिलार्कयोः ॥ ९३ ॥

असङ्कुचितशुद्धार्ककक्षाव्यासदलं फलम् ।
भूकर्ण इच्छाछायाग्रं ततो लिप्तास्तदङ्गुलम् ॥ ९४ ॥

अर्केन्दुकक्षाव्यासार्धे स्फुटे सङ्कुचिते क्रमात् ।
मानेच्छे फलमार्केलावेषं प्रोज्झ्य ततः फलम् ॥ ९५ ॥

भूकर्णादिन्दुकक्षायां छायाव्यासस्तदा तनम् ।
युक्त्या कालाङ्गुलं वक्ष्ये युगत्यन्तरमतिस्फुटम् ॥ ९६ ॥

भूच्छायेलागतस्याथ तरणिभ्रमणे विधोः ।
सूचीमध्यमकक्षायां कियतीति महीश्रवः ॥ ९७ ॥

स्फुटेन्दुभुक्तिघ्नो भक्तो मध्यमा च समं फलम् ।
स्फुटार्कचन्द्रकर्णासं फलमर्कमृगाङ्कयोः ॥ ९८ ॥

मानेच्छे मध्यकर्णास्तु प्रोज्झ्य सूच्यापि भाश्रवः ।
तिथ्या कलायासन्त्येवमेतदर्धं विधोः श्रवः ॥ ९९ ॥

---

92 *b*) S. -वैहि तौ *d*) $D_1$. -द्धते
94 *d*) M. $D_2$. $B_1$. $B_2$. व्यक्षातदंशकम्
95 *c*) Ba. मानेच्छा-
96 *b*) Be. M. $D_2$. $B_1$. $B_2$. An. नतम्
*d*) M. $B_2$. युगान्तरमितिस्फुटम्
97 *b*) S. $B_2$. तदानीम् *c*) S. सा सूचिमध्य-
98 *a b*) Ba. स्फुटसूर्येन्दुभुक्तिघ्नो भक्तो मध्यमया कलम्
*c*) Be. M. $D_1$. $D_2$. $B_1$. $B_2$. -भूकर्णशेषं
99 *a*) Be. M. $D_2$. $B_1$. $B_2$. -च्छा
*b*) M. $D_2$. S. $B_1$. $B_2$. विभाश्रवाः *c*) Ba. तिथ्यः

मध्यमिच्छाधिकाल्पार्कबिम्बाभ्यां तादृशं त्वृणम् ।
मध्यार्कश्रवणे माने तथा स्यादिति तन्मतम् ॥ १०० ॥

तथा स्फुटार्ककक्षायां व्यासार्धेनाधिकेन वा ।
अधिकाल्पमृणं मानेनाधिकाल्पेऽर्के मण्डले ॥ १०१ ॥

परिध्यंशहतो बिम्बव्यासो बिम्बश्रवो भवेत् ।
उच्चेन समं येन योऽपकृष्येत्स तत्समः ॥ १०२ ॥

योऽत्यल्पउच्चो नीचाल्पः स्व बहुस्वल्प एव च ।
तेनापकृष्यते स्वर्णं महदल्पं बहु स्वतः ॥ १०३ ॥

उच्चैर्नीचैर्गते स्वोच्चपरिध्यंशाः स्वभावतः ।
अल्पाधिका यथाशक्ति क्षेपाः मातैस्तथेदृशैः ॥ १०४ ॥

स्यादेतच्च फलं कर्णे शैघ्र्येऽल्पा गतिरन्यथा ।
अधिकाल्पाधिका भुक्तिरुच्चैर्नीचैर्गतस्य हि ॥ १०५ ॥

त्रिज्याधिकाल्पे यदि तु बहिश्चरति स ग्रहः ।
स्वतः शीघ्रानभिमुखं मान्दं तु कचिदस्ति हि ॥ १०६ ॥

मैव यदि स्यादेवैवं स्यात्पूर्वापरभार्धयोः ।
उच्चैर्गेहस्त्वृणधनं वा यद्येतफलं क्रमात ॥ १०७ ॥

100 *a*) M. $D_2$. $B_1$. $B_2$. –कल्पार्के *c*) Ba. मानं
101 *a b*) M. $D_2$. S. $B_1$. $B_2$. –व्यासार्धेनाल्पाधिकेन च
*c*) Be. M. $D_2$. $B_1$. $B_2$. मानं *d*) $D_2$. $B_1$. $B_2$. मण्डलम्
102 *c*) S. तदुच्चस्य *d*) S. –कृष्टः स
103 *b*) M. S. $B_1$. $B_2$. स
104 *c d*) Ba. अल्पाधिककला भुक्तिरुच्चैर्नीचैर्गतस्य हि (compare next verse, second line)
106 This verse is missing in M. $D_2$. $B_1$. $B_2$.
107 *b*) $D_1$. –स्वा *d*) S. –चापक्ष्येत फलं



यदा स्याद्विकला भुक्तिस्तदा यातु भमण्डलम् ।
ग्रह प्राग्गतिहीनं वा प्राक्प्रत्यग्गतिवद् ग्रहात् ॥ १०८ ॥

सर्वोच्चपातान्पातीति ब्रह्माण्डं वै तु नारद ।
प्रतिपादयितुं शक्या वक्रता न यतः परम् ॥ १०९ ॥

प्राग्गतिर्नास्ति यन्नास्ति केवलं तु न कारणम् ।
शनिमन्दात्परं चेत्को हेतुः खेटोऽप्यदर्शनात् ॥ ११० ॥

वक्रता चाधिकगताविव कल्प्यो यदि ग्रहः ।
गतिरन्यानुरूपा सा भूयसीति न कीर्त्यते ॥ १११ ॥

उच्चैर्नीचैर्गतस्याधिकाल्पकर्णेन सूक्ष्मता ।
स्थौल्यं बिम्बस्य चातो हि प्रसज्येत मुनीश्वर ॥ ११२ ॥

हानिवृद्धिगते नैव युक्तियुक्ते यदीरिते ।
उभयोरक्षिसिद्धे ते तन्मे निगदतः श्रुणु ॥ ११३ ॥

उच्चाख्यं प्रोज्झ्य केन्द्रं तद्गतगम्यान्तरं तयोः ।
यदि कल्प्येत दोःकोटी तदा बाहुः प्रसज्यते ॥ ११४ ॥

गताद्भुजज्या विषमे गम्यात्कोटिः पदे इति[1] ।
युग्मभावाद्गतैष्याभ्यां कोटिबाहू युजीति च ॥ ११५ ॥

लिप्तास्तत्वयमैर्भक्ता लब्धाज्यापिण्डका गताः[1] ।
गतगम्यान्तराभ्यस्तं विभजेत्तत्वलोचनैः[2] ॥ ११६ ॥

108 *d*) S. -ग्रहान् for ग्रहात्
109 *a*) Ba. पातान्वाऽतीत्य
110 *a*) An. $D_1$. – न्ना –
113 *c*) Be. M. $D_2$. $B_1$. $B_2$. An अर्थ
115 1) Compare सू. सि. II 30
116 *c*) Ba. –स्ता *d*) Ba. –भाज्यास्त–
1, 2) Compare सू. सि. II 31
...4

तदवाप्तफलं योऽयं ज्यापिण्डे गतसंज्ञके[1] ।
इत्येवं नैव विचरन्सदा ज्यापिण्डशक्तितः ॥ ११७ ॥

गतज्याभावतस्त्विन्दोश्चतुर्थीज्या सदा भवेत् ।
एवं संवर्तमानायां तच्चतुर्थी गता ह्यपि ॥ ११८ ॥

न तात्कालिकसिध्यै स्याद्वर्तमाना यथा स्वतः ।
इष्टनाडीहता केन्द्रगतिः षष्ट्यौद्धृतापि सा ॥ ११९ ॥

बाहुकोटी ज्यान्तरघ्नेतत्वनेत्रैस्तयोः फले ।
प्रत्यहं वर्धमानत्वाच्छीघ्रकेन्द्रस्य वर्धते ॥ १२० ॥

बाहुरोजपदे युग्मे क्षीयते कोटिरन्यथा ।
प्रत्यहं क्षीयमाणत्वान्मन्दकेन्द्रस्य वर्धते ॥ १२१ ॥

कोटिरोजपदे युग्मे क्षीयते बाहुरन्यथा ।
तद्वत्तद्ग्रहवच्चास्य फलं ग्रहफलोदितम् ॥ १२२ ॥

धनाख्यमन्यद्धीनाख्यं धनाख्यं ग्रहवद्गतौ ।
ऋणाख्यमन्यथा प्रोज्झ्य बहुभुक्तिं गतेफलात् ॥ १२३ ॥

ज्यान्तरघ्ना गतिर्यद्वा दोःकोटिज्याथ दृक्क्वचित् ।
त्र्यंशत्र्यंशादिभिर्मन्दे त्रिचन्द्रायैर्हृता हता ॥ १२४ ॥

शैघ्न्ये त्रिभज्यया तुल्या दोर्ज्या चेत् क्षीयतेऽन्वहम् ।
वर्धन्ते स्फुटवृत्तांशास्तथा व्यस्तास्तु नान्यथा ॥ १२५ ॥

117 1) Compare सू. सि. II 32
119 *a*) M. $D_2$. $B_1$. $B_2$. ना; Ba. सिद्धिः
122 *b*) M. $D_1$. $D_2$. $B_1$. $B_2$. कोटि-
123 *b*) $D_1$. S. तेः
*d*) M. $D_2$. S. $B_1$. $B_2$. An. वक्रभुक्तिः An. S. गतिं
124 *b*) S. र्धं, M. $D_1$. $D_2$. S. $B_1$. $B_2$. An. दृक्करैः
125 *a*) M. $D_2$. $B_1$. $B_2$. शीघ्रैः



तद्व्यस्तं जीवशन्योस्तु शैघ्न्ये युक्तिश्च सैव हि ।
स्फुटवृत्तान्तरहते दोःकोटिज्येग्रहस्य तु ॥ १२६ ॥

गतार्धं स्फुटवृत्तघ्नं बाहुकोटिज्ययोर्धनम् ।
वर्धमाने परिध्यंशे क्षीयमाणे ऋणं मुने ॥ १२७ ॥

गत्यर्धा बाहुकोटिज्याग्रहार्था वर्धते यदि ।
धनात्मिका क्षीयते चेदृणरूपेति सैव च ॥ १२८ ॥

निश्चित्य फलजान्योन्यैः कृत्वा योगान्तरं मुनेः ।
भगणांशैर्बाहुकोटयोः फलजे तां विभज्य च ॥ १२९ ॥

ग्रहमुक्तेर्दोः फलज्या वर्गानारमितीरिता ।
कर्णदोः फलजावर्गैर्नाडिका यावता भवेत् ॥ १३० ॥

गतेः कोटिफलज्या तु द्विधा स्यात्तावता हता ।
कर्णयोर्बहुवृद्धौ तु स्वल्पायां गति खेटयोः ॥ १३१ ॥

ग्रहदोः फलजा वर्गं यावतोनाधिकं व्रजेत् ।
यावद्वर्गो गतिः कर्णस्तावत्येव न संशयः ॥ १३२ ॥

127 *a*) M. S. $B_2$. An. गत्यर्धं
128 *b*) Ba. ग्रहवत् *d*) Ba. $D_1$. S. An. -द्गुण-
129 *d*) $D_1$. S. An. ज्ये
The other verse appears in the footnote of Ba and in all other mss. after 129 :—
ग्रहभावफलज्ये द्विविधा दिग्जा युतोनिता ।
गुणिता च गतेर्विप्र स्वर्णबाहुफलज्यया ॥
(Some mss. read ग्रहबाहु -.)
131 *b*) M. $D_2$. S. $B_2$. An. - द्विघ्ना *c*) S. - र्बाहुतो वृद्धौ
*d*) M. $D_2$. S. $B_1$. $B_2$. तुल्यायां
132 *a*) Ba. वर्गो *c*) Ba. -र्गो

तां तु वर्गान्तरात्कर्णो दोः कोटिज्यां विशोधयेत् ।
क्षीयमाणे वर्धमाने तूभाभ्यां तद्वये धनम्[1] ॥ १३३ ॥

कुर्याद्यथोक्तनिष्पन्नकर्णबाहू यथा तथा ।
वर्धते क्षीयते चापि मृगात्कोटिफलेन च ॥ १३४ ॥

कर्क्यादि केन्द्रे तद्व्यस्तं चलकर्णस्तथा कृतः ।
कर्णे कक्षागते कोटिफलं मौर्व्या महामुने ॥ १३५ ॥

छेदोऽसौ द्विगुणस्तेन स्वच्छेदासफलेन च ।
दोः फलानुगुणश्चेन्दोः स्वकादूनाधिको भवेत् ॥ १३६ ॥

स्थिरीकृतफलेनैव कर्णः कल्प्यः स्फुटः कृतः ।
गत्यर्धं चलकर्णं स्यात्त्रिज्यादोः फलजावधे ॥ १३७ ॥

ग्रहबाहुफलज्या तु कर्णान्तरहतोत्तरा ।
स्वमूलाधिककर्णेन ग्रहकर्णविवारिणा ॥ १३८ ॥

ऊनाधिका गुणस्तादृक्फलं यत्तच्छिदान्यथा ।
स्वकाभ्यां वृत्तकर्णाभ्यां ग्रहात्सिद्धाद्ग्रहं मुने ॥ १३९ ॥

---

133 1) Additional verse in S. after this is

एकतः क्षीयमाणे चेत्तरते वर्धमानके ।
कर्ण इत्यक्तं भवतीत्युभाभ्यां तू भये इति ॥

The second line here reads like a commentary. Actually no commentary to this siddhānta is known to exist.

134 *b*) S. -बाहुर्यथा

135 *a*) S. -कन्यादि *b*) S. -विधः

136 *b*) $D_1$. An. छेद्या-

137 *c*) M. $D_1$. $D_2$. $B_1$. $B_2$. An. - चलकर्णं

138 *b*) Ba. -हता तथा
*c*) M. $D_1$. S. An. स्वर्णमूलाधिके कर्णे
$D_2$. $B_1$. $B_2$. स्वर्णमूलाधिके कर्णे
*d*) M. $B_1$. $B_2$. -कर्णाद्विचारता S. -कर्णाद्विचारतः

139 *a*) Ba. Be. - ऊनाधिक



तत्पूर्वकालिकं हित्वा भुक्तौसत्यां गतेः फलम् ।
तादृक् स्यादिति संस्कारो वृत्तात्कर्णादिहाधिकः ॥ १४० ॥

निष्पन्नराशेः कर्णोनगतिर्दोः फलमौर्विका ।
ज्यां प्रोज्झ्या तत्वयमलैर्हत्वातद्विवरोद्धृतम्[1] ॥ १४१ ॥

सङ्ख्या तत्वाश्विसंवर्गे संयोज्य धनुरुच्यते[1] ।
इति क्रिया यदा तत्र तत्वाश्विभ्यः फलं लघु ॥ १४२ ॥

यज्ज्याखण्डफलं यावत्तावत्तत्वाश्विसङ्गुणम् ।
तज्ज्याखण्डोद्धृतं भुक्तेः फलं लिप्तादिकं स्फुटम् ॥ १४३ ॥

यथा ग्रहफलं यत्र तद्भुक्तौ च गतेः फलम् ।
तथान्यथा त्वृणफलं वक्रभुक्तिस्त्वृणाधिके ॥ १४४ ॥

भुजज्या क्षीयमाणत्वादत्यल्पं श्रवणस्य च ।
परार्धादौमहदृणं पूर्वाहादुत्तरे दिने ॥ १४५ ॥

अतो वक्रानुवक्रेति परपूर्वार्धयोः क्रमात् ।
प्रत्यग्गतेर्हानिवृद्धी वक्रोत्था त्वन्वहं गतौ ॥ १४६ ॥

---

141 *c*) प्रोज्झ्य (?) 1) Compare सू. सि. II 33

142 *b*) Be. M. $D_1$. $D_2$. S. $B_1$. $B_2$. - ज्यं
*c*) Be. M. $D_1$. $D_2$. S. $B_1$. $B_2$. An. क्रिये $D_1$. An. यथा
1) Compare सू. सि. II 33

143 $D_1$, - वर्गफलं *d*) Ba. भवेत्

144 *d*) S. -णेऽधिके

145 *a*) M. $D_2$. $B_1$. - स्या
Between these two lines Ba. Be. $D_1$. S. An. give the following verse :—

प्राग्लभ्यते च गत्यल्पं पूर्वाह्नादुत्तरे दिने ।
भुजस्य वर्धमानत्वादप्यल्पश्रवणस्य च ॥

The second line, However, is missing in Be.

मन्दमन्दार्धयोः कर्णः स्याच्छेदत्वादवक्रता ।
अर्धितत्वात्फलस्यैव शीघ्रार्धे मुनिसत्तम[1] ॥ १४७ ॥

दूरस्थितः स्वशीघ्रोच्चाद्ग्रहः शिथिलरश्मिभिः[1] ।
सव्येतराकृष्टतनुर्वक्रभुक्तिर्भवेदिति[2] ॥ १४८ ॥

नाकृष्यन्ते हि शीघ्रार्धादाकृष्यन्ते ग्रहा इति ।
विशेषोऽस्तीति चेन्नित्यं तत्तद्भावप्रसक्तितः ॥ १४९ ॥

अर्धितत्वात्फलस्यैवमित्युक्तं कारणं त्विह ।
इति चेद्वक्रभुक्तिश्च किं न स्यात्तादृशी सखे ॥ १५० ॥

अतो न रश्मिशैथिल्यं वाङ्मात्रा रश्मयः किल ।
चुम्बकभ्रमकन्यायेनोच्चाभिमुखमेव च ॥ १५१ ॥

स्वयं याति ग्रहो भुक्तिस्तत्फलानुगुणा भवेत् ।
उपचारः सर्वमन्यन्मुख्येयमिति हि स्थितिः ॥ १५२ ॥

शीघ्रवृत्तांशानुरूपं विप्रकर्षः प्रकल्प्यते ।
शीघ्रोच्चात्सप्तमे भौमः शुक्रो ज्ञेयस्तथाष्टमे ॥ १५३ ॥

शनैश्चरस्तु नवमे वक्रिणस्ते त्ववक्रिणः ।
षष्ठे च पञ्चमे तद्वच्चतुर्थे मुनिसत्तम[1] ॥ १५४ ॥

अष्टौविंशतिरर्धोन गजाग्निव्यर्ध रवेषवः ।
त्रितर्काः सत्रिभागाद्रिरसाङ्काः सषड्शतम् ॥ १५५ ॥

---

147 1) Additional verse in S. after this is
दूरस्थितस्वशीघ्रोच्चाग्नेति वक्रत्वमेव यत् ।
शीघ्रार्धतो लोकदृष्ट्या भौमादावुपयुज्यते ॥

148 1, 2) Compare सू. सि. II 52

149 *d*) Ba. – प्रशक्तिवत्

151 *b*) Ba. – द्र

152 *b*) Ba. – द्युक्तय –

154 1) There are eleven and half additional verses after this in S. See appendix II.



नवांशा नवसूर्याश्च वेदेन्द्राः शरबाणभूः ।
खात्यष्टिः खधृतिर्गोऽतिधृतिर्विश्वाश्विनस्तथा ॥ १५६ ॥

वेदाकृतिर्गो द्विदस्राः कब्धिहस्ता युगार्थदृक्
खोत्कृतिस्त्र्यंशहीनागर सहस्ताः खदन्ति दृक् ॥ १५७ ॥

खगोऽश्विनः खदन्ताः षड्दन्ताः शैलगुणाग्नयः ।
मेषाद्यश्व्यादि मध्यांशाः षडंशोनाः खषड्गुणाः ॥ १५८ ॥

द्वित्रिषट्पञ्चवह्नीन्दुद्वित्रिपञ्चार्थदृक्शराः ।
शरेन्दुभूद्विवह्नित्रिगोऽब्धिवेदत्रिवन्हयः ॥ १५९ ॥

शराःशतं द्विद्विरदास्तारासङ्ख्याः स्युरश्विभात् ।
पुनर्वसोरुत्तरर्क्षे दक्षिणर्क्षे च नारद ॥ १६० ॥

प्राङ्मात्रमपि वाश्विन्यां सहायमुपकारणे ।
अश्वयोनिक्षुरप्रख्यं शकटैण शिरोनिभम् ॥ १६१ ॥

माणिक्यगृहबाणाभं चक्रप्राकारसन्निभम् ।
द्विपर्यङ्कनिभं हस्तमुक्ताविद्रुमसन्निभम् ॥ १६२ ॥

तोरणं वलिसङ्काशं कुण्डलं सिंहपुच्छवत् ।
गजकर्णाकृतिः कर्णः शृङ्गाटकनिभोऽभिजित् ॥ १६३ ॥

---

157 *c*) $D_1$. $B_1$. $B_2$. श्च
* S. खषड्यमाग्निभागोनाद्युत्कृतिः खाष्ट बाहवः । None of these two readings gives satisfactority, the value of the polar longitude of Abhijit,

158 *c*) Ba. मध्याख्याः

159 *a*) त्रि should be the correct value here, but no text except Ba. has त्रि.

162 *d*) Ba. M. $D_1$. $D_2$. $B_1$. $B_2$. An. दीपमौक्तिक

163 *a b*) M. $D_2$. S. $B_1$. $B_2$. An. तोरणाभं त्रयं तालनिभं शय्यनिभे उभे
After the first line Ba. alone has the following line :—
स्तम्बेरमरदाभं च तथा शय्यानिभं स्मृतम् ।

(*Continued on the next page*)

अश्विन्या मुरजाभं तु द्वे मूले ह्यन्यदार्षिकम् ।
आषाढद्वितयं चैव योगताराथ वक्ष्यते ॥ १६४ ॥

उत्तराद्विभ सौम्यानां मध्यमात् त्रिभमेव हि ।
ब्रह्मादित्यभदैत्यानां प्राची हस्तस्यवायवी ॥ १६५ ॥

सा पश्चिमा तद्द्वितीया श्रविष्ठायाश्च पश्चिमा ।
पितृपूषयमाग्नीनां श्रवणाभिजितोस्तथा ॥ १६६ ॥

मूलाद्रा सार्धसप्तांशे स्वस्थानात्प्रागवस्थिता ।
दृश्यते यस्य तस्यास्ति न स्वप्नेऽपि शिवस्मृतिः ॥ १६७ ॥

यत्र यावत्सु विक्षिप्तास्तारा अंशेषु वेधसा ।
मयैव तत्र तावन्तो विक्षेपांशा उपग्रहाः ॥ १६८ ॥

द्विदेवात्षट्त्रयं स्रष्टुस्त्वष्ट्रार्का हि प्रचेतसः ।
स्वक्रान्तेर्दक्षिणस्थानात्तदन्येभ्यस्तथोत्तरे ॥ १६९ ॥

आशार्कपञ्चबाणाशा नवषट् खाद्रिखांशुमान्[1] ।
विश्वेशहस्तसप्ताग्निरध्यर्धत्रिकृताङ्ककाः ॥ १७० ॥

व्यर्धतर्काः शराः षष्टिस्त्रिंशत् षट्त्रिंशदेव हि ।
अध्यर्धकृत्यु[1] त्कृतिः खं विक्षेपांशाः स्युरश्विभात् ॥ १७१ ॥

(*Continued from the last page*)

And after 163 Ba. alone has the following twh lines :—

मृदङ्गसदृशं तद्वत् वृत्ताकारं तथा पुनः ।
उभे शय्यानिभे तद्वन्मृदङ्गसदृशं पुनः ।

All texts other than Ba. have the following line after 163 :-

त्रिशूलवन्मृदङ्गाभं वृत्तं शय्यानिभं द्वयम् ।

164 *a b*) तद्वन्मूले

165 *a*) Ba. त्रि M. $D_1$. S. $B_1$. $B_2$. An. सौ

169 *c d*) S. स्वक्रान्त्यन्ता दक्षिणस्था उत्तरस्थास्तथेतरे ।

171 *c*) M. $D_2$. $B_1$. $B_2$. – संस्कृ –

(*Continued on the next page*)



क्षेपार्धांशो वारुणस्य छायाया भिन्नमङ्कतः ।
विक्षिप्तो दक्षिणेऽशीत्यामगस्त्यो मिथुनान्तगः[1] ॥ १७२ ॥

मिथुनांशे मृगव्याधो विंशे याम्ये नभार्णवे[1] ।
हुतभुग् ब्रह्महृदयौ वृषे द्वाविंशभागगौ[2] ॥ १७३ ॥

अष्टाभिस्त्रिंशता चैव विक्षिप्तावुत्तरेण तौ[1] ।
पूर्वस्यां ब्रह्महृदयात्पञ्चांशैस्तु प्रजापतिः[2] ॥ १७४ ॥

सौम्येऽष्टत्रिंशदंशैस्तु निर्देश्यः सर्वदा मुने[1] ।
उत्तरेंऽशैरपांवत्सश्चित्रायाः पञ्चभिस्तथा[2] ॥ १७५ ॥

आपस्ततोऽधिकः स्वल्पं षड्भिरंशैस्तदुत्तरे ।
यदैवादौ तदान्यस्मिन् ज्ञाते तारागणेऽपि च ॥ १७६ ॥

फलाभावान्न तं सर्वमुत्सहे कथितुं मुने ।
युगादौ विष्णुताराया: क्रतुर्भाद्यैः समाहितः ॥ १७७ ॥

प्राच्यां त्रिहस्तैः पुलहः पुलस्त्योऽतो दशांशकैः ।
अत्रिस्ततस्त्रिभिर्भागैरङ्गिरा ह्यष्टभिस्ततः ॥ १७८ ॥

(*Continued from the last page*)

1) This reading gives a figure of 1°30' Śatatarakā which differs from the Sūryasiddhānta figure which is just 30'. The next figure for Pūrvābhādrapadā comes to 20 instead of 24 of Sūryasiddhānta. If संस्कृति in the other readings is taken to mean 24, the question of अध्य still remains. An gives the word as अर्ध.

172 1) Compare Sūryasiddhānta VIII 10

173 *b*) भो (?) 1) Compare Sūryasiddhānta VIII 10
2) Compare Sūryasiddhānta VIII 11

174 1) Compare Sūryasiddhānta VIII 12
2) Compare Sūryasiddhānta VIII 20

175 1) Compare सू. सि. VIII 20
2) Compare Sūryasiddhānta VIII 21

...5

वसिष्ठः सप्तभिस्तस्मान्मरीचिर्दशभिस्ततः ।
प्रत्यब्दं प्राग्गतिस्तेषामष्टौ लिप्ता मुनीश्वर ॥ १७९ ॥

बाणार्था भूशराः खार्थाः षड्बाणाः सप्तसायकाः ।
षष्टिर्नभोरसास्तेषां विक्षेपांशाः स्युरुत्तरे ॥ १८० ॥

क्वचित्क्वचिदकस्मात्ते भगवन्नुत्तरे चराः ।
खखनक्षत्रवर्षाणि तिष्ठन्ति मुनिवल्लभाः ॥ १८१ ॥

कालान्तरेण तज्ज्ञानं स्वयं युक्तिमतो भवेत् ।
कर्क्यादिस्था मृगादिस्थाः सृष्टेरुदगवाङ्मुखाः ॥ १८२ ॥

प्रत्यब्दं यान्ति याम्योदग्गमने विहितेऽपि यत् ।
तत्पश्चाच्चलितं चक्रमुपचारोऽयमित्यपि ॥ १८३ ॥

तत्तत्पश्चाल्लवक्रान्तिप्रसङ्गाद्द्विहग्लवाः ।
ततोऽन्यथाथ प्रत्यब्दं किञ्चित्किञ्चिद्व्रजन्त्यपि ॥ १८४ ॥

तत्तत्प्रागशकक्रान्तिप्रसङ्गेऽपि निजास्पदात् ।
पश्चिमांशक्रमप्राप्तेः प्राक्चक्रं चलितं न हि ॥ १८५ ॥

यावत्सृष्ट्यादिनिर्दिष्टस्थानं तावत्प्रयान्ति ते ।
आद्यैवं चरतां तेषामन्तरांशास्तदास्पदात् ॥ १८६ ॥

तत्तप्रागंशकक्रान्तिप्राप्तेः स्वात्प्राग्लवस्य च ।
प्राक्चक्रं चलितं चेति नारदैवोपचर्यते ॥ १८७ ॥

प्रागंशकक्रमप्राप्तेः प्राक्चक्रं चलितं भवेत् ।
प्राक्पश्चाच्चलनांशोनः स्वांशः स्याद्भास्करादिषु ॥ १८८ ॥

179 *c*) An. स्वे
181 *b*) M. $D_2$. $B_1$. $B_2$. भार्गवादुत्तरे
182 *c*) Ba. मृगान्तस्थाः
185 *d*) Ba. हितम्
186 *b*) Ba. Be. $D_1$. An. प्रभान्ति *c*) Ba. भायेषु
188 *a*) Ba. $D_1$. An. प्रागंशक्रममप्राप्तेः



क्रान्तिकालांशलग्नानां लम्बनं द्युगतं द्वयोः ।
स्फुटार्थमयनार्थं च प्रत्यहं ह्युदयास्तयोः ॥ १८९ ॥

यद्दिने यस्य या कक्षा तत्र तेषां प्रवृत्तितः ।
इत्येतदेकं चलनं प्राग्युगे तानि षट्शतम् ॥ १९० ॥

युक्त्यायनग्रहस्तस्मिंस्तुलादौ प्राक्चलं भवेत् ।
यद्वा तच्छुद्धचक्रे वा मेषादौ प्राक्चलं भवेत् ॥ १९१ ॥

अयनांशस्तद्भुजांशास्त्रिघ्नाः सन्तो दशोद्धृताः ।
प्राक्प्रत्यक्चलनं चक्रस्यैवेति मनुते तु यः । १९२ ॥

चलांशसंस्कृतस्तस्य ग्रह एव स्फुटग्रहः ।
अनभ्युपगमादेतस्योपचारश्च चेदिति ॥ १९३ ॥

दोर्ज्या त्रिज्या क्रान्तिजीवा चेत्सप्ताङ्कगुणेन्दवः ।
चापक्रान्तिरुदग्याम्या चक्रपूर्वापरार्धयोः ॥ १९४ ॥

सा तुल्यभिन्नदिक्क्षेपयुतोना स्यात्स्फुटा च दिक् ।
एवो भयोरधिकदिङ् न्यायोऽयमितरत्र च ॥ १९५ ॥

रक्षोगणत्वात्पातानामपसव्यं ययुर्ग्रहाः ।
प्राक्पश्चार्धगतः पातो ग्रहाद् भ्रामयति ग्रहम् ॥ १९६ ॥

याम्योत्तराशाभिमुखं केन्द्रदोर्ज्या च पूर्ववत् ।
क्रान्तेः पूर्वे वा परार्धे याम्यक्षेपो यदेष्यति[1] ॥ १९७ ॥

पातं संशोध्यापकृष्यात्केन्द्रदोर्ज्यां च विद्धि भोः[1] ।
दोर्ज्या त्रिभज्या चैकाशीत्यंशकाः परमं ययुः ॥ १९८ ॥

189 *c*) S. स्फुटार्धमयनत्वोश्च
195 *a*) Be. M. $D_1$. $B_1$. $B_2$. An. तुल्या
*d*) Ba. Be. मात्रोऽयमितरस्य
197 1) Missing in M. $D_2$. $B_1$. $B_2$.
198 1) Missing in M. $D_2$. $B_1$. $B_2$.

विक्षिप्यते राहुणा तु दोर्ज्या क्रान्तिलवाश्रया ।
तन्नवांशं द्विगुणितं जीवस्त्रिगुणमुर्विजः[1] ॥ १९९ ॥

बुधशुक्रार्कजाः पातैर्विक्षिप्यन्ते चतुर्गुणम्[1] ।
दशघ्नत्रिघनाङ्कार्करसार्कार्काहतस्य च ॥ २०० ॥

बिम्बस्य पातबिम्बत्वात्क्षेपस्तद्धनुरुच्यते ।
त्रिगुणास्त्वंशकैर्भक्तास्त्रिज्यार्धं बिम्बयोजनम् ॥ २०१ ॥

दस्रादीनां स्फुटं नास्ति स्फुटं तारामहस्य तु ।
इन्दोरपि समीपत्वान्नैवं स्याद्बिम्बयोजनम् ॥ २०२ ॥

रूपसाम्यात्समीपत्वादन्येषां भगणस्य च ।
समानन्यायतापत्तिः कक्षाभेदान्न सा सती ॥ २०३ ॥

अपक्रमास्त्वक्षेपान्ते दृश्यन्ते खचरा यतः ।
क्रान्तिमेत्यपुरः क्षेपं पश्चादेतीति चेत्ततः ॥ २०४ ॥

उभयानुगुणं शुद्धक्रान्त्यन्ते खेचरो व्रजेत् ।
नान्यथापत्तिरित्येवं प्रोक्ता शङ्का निरास्पदा ॥ २०५ ॥

दोः कोटयोरिष्टजीवोना त्रिज्यान्या क्रममौर्विका ।
चक्रक्रान्तिमहीकक्षामानेच्छाफलमित्यतः ॥ २०६ ॥

व्यक्षाग्रहस्याधस्थानं क्रान्तिदिक्कं विनिर्दिशेत् ।
तस्मिश्चक्रविशालार्थं क्रान्तिकोट्युत्थमौर्विका ॥ २०७ ॥

स्वाहोरात्रार्धकर्णः स्याद्दिनव्यासदलं मुने ।
स्वाहोरात्रार्धमित्यार्यैरुच्यते नामभिस्त्रिभिः ॥ २०८ ॥

199 1) Compare सू. सि. I 69
200 1) Compare सू. सि. I 69
207 *a*) Ba. विन्दूयाद्ग्रहघन



क्रान्त्यैति यावत्तावत्तु व्यक्षादोजपदोत्थया ।
तन्मेरुमध्यात्तावन्ति स्याच्चक्रार्धस्य तावती ॥ २०९ ॥

यावती युगपत्क्रान्तिस्तावती रात्रिरुच्यते ।
अन्यद्दिवात्र तन्मेरुः परो मेरुरितीरितः ॥ २१० ॥

मेरुभ्यां भूमिकक्षायां भागे पञ्चदशे मुने ।
विलोमेनायनान्ते तु सुरासुरविभागयोः[1] ॥ २११ ॥

नाडीषष्ट्या सकृदहर्नाडीषष्ट्या सकृन्निशा[1] ।
तदन्तरे मर्त्यलोके क्षयवृद्धी दिवानिशोः ॥ २१२ ॥

तथैव घटिकाषष्ट्या ते यत्सर्वं यथोदितम् ।
दारुभिर्विषुवत्कक्षा क्रान्तिकक्षा उभे अपि ॥ २१३ ॥

आधारकक्षे क्षितिजं मण्डलं पञ्च वै समाः ।
रात्र्यन्तकक्षाः षट्त्रिंस उदक्त्रिस्त्रस्त्वपागतिः ॥ २१४ ॥

कृत्वा तद्वद्दिनव्यासदलैर्बध्वा यथोचितम् ।
आधारकक्ष्ययोर्योगो ध्रुवयोः स्थानमत्र तु ॥ २१५ ॥

रथचक्रबिले मेरुर्दण्डद्वीपाद्रिसागरैः ।
नदीभिः पट्टनवनैर्भूगोलेन युतेन च ॥ २१६ ॥

क्रान्तिकक्षाश्चतुःषष्टिस्तदावृत्तेन सर्वतः ।
मध्योन्नतं प्रसार्याग्रे उभयत्र विनिर्गतम् ॥ २१७ ॥

209 *b*) Be. M. $D_2$. $B_1$. An द्व्य
210 *a*) S. यावता    M. $D_2$. S. $B_1$. $B_2$. युक्तदक्रान्ति
211 *a*) Ba. $D_1$. मेरू    1) Compare सू. सि. XII 61
212 *d*) Ba. Be. $D_1$. $B_1$. $B_2$. An. क्वचिद्वृद्धिः
1) Compare सू. सि. XII 61
214 *b*) Ba. चक्रकैः
216 *c*) Ba. पत्तनपुरे-

यथा ध्रुवौ ध्रुवसमौ स्तम्भयोः स्थापयेद् दृढम् ।
अष्टभिर्मध्यकक्षाद्यैर्ध्रुवद्वयगतैरपि ॥ २१८ ॥

विभज्य गोलं द्वादशधा मेषादीन्निर्दिशेत्समान् ।
तुलामेषादितः कर्किमृगादि च लवद्वयोः ॥ २१९ ॥

तन्मुखाधारकक्षायां योगकक्षां प्रवेशयेत ।
क्रान्तिसंज्ञा तिर्यगेवं तुलामेषादितः सुत ॥ २२० ॥

स्वपरध्रुवयोः कक्षा मध्यस्था क्षितिजाभिधा ।
अक्षांशमानेनोपरिष्टाद्योजयेद्यन्त्रमुत्तमम् ॥ २२१ ॥

आच्छाद्य शुक्लवस्त्रेण निर्दिश्यांशांश्च नाडिकाः ।
मेषोन्नतस्थानतस्तु तच्छुद्धक्रान्तिमस्तके ॥ २२२ ॥

नतं वियच्चरं स्थाप्य कालयन्त्रैश्च कालवित् ।
सूर्याद्दिनगतिं सूत्रैरुन्नयेदुदयस्तुलात् ॥ २२३ ॥

क्षितिज[illegible]दुदयं लग्नात्तद्दशाच्च खमध्यगम् ।
अस्तं गच्छंश्च विज्ञेयः सर्वं प्रत्यक्षतामियात् ॥ २२४ ॥

पश्चाचली मही मेरुध्रुवौ क्षितिजमण्डलम् ।
अवटस्थमधोभागं क्षितिजादत्र कारयेत् ॥ २२५ ॥

उपर्यधोगता नाड्यः क्षितिजात्स्युरहर्निशोः ।
साक्षे चक्रस्य तिर्यत्क्वा( ? क्त्वा )दुदयस्योदगुत्तरम् ॥ २२६ ॥

क्षपा सञ्चरतोऽल्पा स्यादनल्पं दिनमात्मज ।
अन्यदेतरयादातु लङ्का क्षितिजमण्डलात् ॥ २२७ ॥

---

218 *c*) An. S. $B_1$. $B_2$. –धैं–
222 *c*) $D_1$. मेषात्ततस्थानतस्तु
224 *c*) S. यत्ज्ञेयं
225 *d*) An. –द्वात्र, M. $D_2$. $B_1$. $B_2$. कल्पयेत्
227 *c*) S. –थे–



अत ऊर्ध्वं प्रातदृष्ट्या क्षितिजात्ताद्दशात्स्वकात् ।
एवं सत्युत्तरक्रान्तौ त्रिंशतोऽल्पाधिकं दिनम् ॥ २२८ ॥

पूर्वापरामरांशे तु याम्यक्रान्तौ विपर्ययात् ।
अक्षच्छाया द्वादश चेन्मेषादिक्षितिजान्तरम् ॥ २२९ ॥

क्रान्तिज्या लघुकक्षायां तत् क्षितिज्येति चोच्यते ।
तच्चापार्धं दिनव्यासदलं त्रिज्येति कल्प्यताम् ॥ २३० ॥

सा विशिष्टा तच्चरज्या चरप्राणा हि तद्धनुः ।
नाड्यः पञ्चदशैतेन द्युक्षपार्धादिसंस्कृताः ॥ २३१ ॥

दिनक्षये तद्द्विगुणे षष्टिरेव तयोर्युतिः ।
कक्षायामधिकाल्पायां महत्यल्पा च नाडिका ॥ २३२ ॥

महान्तोऽल्पास्तथांशा यद्वैषुवत्यां ततोऽधिकाः ।
भान्तकक्षासु षट्स्वल्पास्तोकस्तोकेन नारद ॥ २३३ ॥

तदेवैवं भवेदोजपदे क्षिप्त्वादितोऽन्यथा ।
अनोजपदभेष्वेवं दुःसाध्यत्वाच्च कस्यचित् ॥ २३४ ॥

युक्तिसिद्ध्यैव कक्षाणां कल्प्यं व्यासदलं समम् ।
इष्टद्युभुक्तिकर्णार्धमेकद्वित्रिभमौर्विकाः ॥ २३५ ॥

फलं चापानुरूपं तत्तत्कक्षासु प्रकल्पिताः ।
अहोरात्रार्धकर्णः स्यात्तस्य तस्य मितिर्भवेत् ॥ २३६ ॥

इच्छायामन्यकक्षायां त्रिज्या त्रिज्याधिका न तत् ।
इच्छा कक्षा चापखण्डा मेषाल्लङ्कोदयासवः ॥ २३७ ॥

---

228 *a*) Be. $D_1$. S. An. –अध
*b*) S. –गात्मकात्
234 *a*) An. –वेद
235 *a*) S. –द्वैश्च
237 *c*) S. इच्छान्यकक्षा चाखण्डा

खागाष्टयोऽर्थगोऽश्वैकाः शरत्र्यङ्कहिमांशवः[1] ।
कर्कटान्ते विलोमेन तुलायाः षट् च ते मुहुः ॥ २३८ ॥

अनल्पा राशयोऽन्योन्यं तल्लग्नादीदृशा अपि ।
मध्यप्रान्तमहान्त्युमन्दवायुवशाद्गतिः ॥ २३९ ॥

शीघ्रमन्दा सती खेटान् दर्शयेत्समसञ्चरान् ।
मध्यामध्यमहास्वल्पमार्गाभ्यां भ्रामकं समम् ॥ २४० ॥

सर्वेषां चित्रमस्तीति मा शङ्कास्तु तदेव च ।
खेचारिणः खगाः खेटाः खेचराश्च वियच्चराः ॥ २४१ ॥

इति हि व्यवहारोऽयमृषीणां महतां मुने ।
पूर्णं मेषादिभिर्गोलं चक्रं स्यान्न तु चेन्न तत् ॥ २४२ ॥

ग्रहमैत्रादिवद्भावा मेषाद्या हि प्रकीर्तिताः ।
वस्तुवृत्तेन मेषाद्या ग्रहमैत्रादिता न हि ॥ २४३ ॥

व्याक्षादुत्तरतस्तत्तदुदगुत्तरतो नतम् ।
पार्श्वयोः क्षितिजं व्यक्षं क्षितिजादुत्तरे दले ॥ २४४ ॥

तथा दक्षिणचक्रार्धे दृश्यते ह्यन्यथा मुने ।
तावत्प्रतीच्यै क्षितिजं तावत्तदुभयास्पदम् ॥ २४५ ॥

कल्प्या निरक्षाः क्षितिजप्रकारंस्थानतस्ततः ।
उत्तरोत्तरतोऽधोऽधो मृगषट्कमुदेति हि ॥ २४६ ॥

निःशेषं स्वोदयस्थानं पश्चात्सृष्टेन गच्छति ।
अतो मृगाद्याः षट् स्वस्वचरखण्डविवर्जिताः ॥ २४७ ॥

---

238 1) Compare सू. सि. III 44
240 a) Ba. -श्चयान्
243 d) Ba. -वन्न हि
245 c) Ba. $D_1$. An. -स्यै
247 b.) S. पृष्ठेन



स्वोदयाः कर्कटाद्यास्तु दृश्यन्ते षट् ततोऽन्यथा ।
तत्कालक्रान्तिकक्षातो राशीनां क्षितिजात्स्वकात् ॥ २४८ ॥

उदयास्तमयावेव स्वकार्येणान्यथा यतः ।
लग्नानयनवेलायां संस्कारोऽत्रायनस्य च ॥ २४९ ॥

इष्टस्य क्रान्तिकक्षातो यदन्यत्तत्र चापि तत् ।
मर्त्यलोकोत्तरावाच्योरक्षभा सप्तविंशतिः ॥ २५० ॥

तयोर्मृगाद्याः कर्काद्या युगपत्पष्टिदर्शनात् ।
अतो देवासुरांशे तु व्यस्ता लग्नादिनक्षपाः ॥ २५१ ॥

अमर्त्यलोके गणितं नैतदेवं महामते ।
यद्राशिस्थो यत्र दृश्यस्ते मासास्तत्र दृश्यकाः ॥ २५२ ॥

तद्राशेस्तद्ग्रहः प्राणास्तत्स्थ भुक्तेः कृतीत्तितैः ।
अधिकत्वं त्वहोरात्रं ताराहोरात्रतो भवेत् ॥ २५३ ॥

नाक्षत्रनाड्यस्ता नाड्यस्तास्तु स्वर्णचरं यदि ।
कुर्वीत चरणाडीश्च प्रोक्तं तन्मानजं फलम् ॥ २५४ ॥

इच्छा तत्रदहोरात्रं नाक्षत्रं मानमित्यपि ।
षष्टिश्चरंतं नक्षत्रं संस्कुर्यात्तादृशे मुने ॥ २५५ ॥

स्वाहोरात्र चतुर्भागे नाक्षत्रं द्युक्षपादलम्[1] ।
सौरनाड्यो भुक्तिसिद्धास्तत्तन्नाड्योऽन्यथोद्भवाः ॥ २५६ ॥

ग्रहद्वयान्तरा षष्टिस्तन्नाक्षत्रं दिनान्तरम् ।
भवन्ति फलमानेच्छास्ताश्चाक्ष्योनाडिकाः स्मृताः ॥ २५७ ॥

---

251 d) Ba. व्यस्तलग्नाहिनं क्षपा ।
252 c) Ba. -ष्ट-
253 b) Ba. कलीकृतेः
255 c) Ba. तत्र नाक्षत्रं
256 1) Compare सू. सि. II 62

नाक्षत्रनाड्यः कथने सौरास्तात्कालिकागमे ।
छायालग्नागमे तत्तन्नाड्यो ग्राह्या इति स्थितिः ॥ २५८ ॥

अनुक्तं रोमशेन्दुकैराद्यैस्तत्ते स्मृतं स्वतः ।
इत्येवं कथितं पुत्रान्यद्वै श्रृ(? शृ)णु समाहितः[1] ॥ २५९ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
द्वितीयोऽध्यायः ॥ २ ॥

259 1) Only Ba. has this line.

# तृतीयोऽध्यायः।

तिथयस्त्रिंशदृक्षाणि सप्तविंशतिरेव हि ।
तावन्तो भगणे योगाः करणानि नभोरसाः ॥ १ ॥

अर्कोनचन्द्रलिप्ताभ्यस्तिथयः करणानि च[1] ।
ग्रहस्य भानि सार्केन्दोर्योगाः स्युर्भोगभाजिताः ॥ २ ॥

प्रवेशनिर्गमौ तेषां तादृक् भुक्त्या मुहुस्तथा ।
तौ कार्यौ वर्तमानानां तत्तन्मध्यस्फुटग्रहैः ॥ ३ ॥

मासादि करणं हित्वा किंस्तुघ्नं स्थिरसंज्ञितम् ।
तिथ्यर्धराशेः सप्तैव ववादि चरसंज्ञितम् ॥ ४ ॥

मासेऽष्ट कृत्व एकैकं वर्तते करणं चरम्[1] ।
स्थिराणि त्रीणि मासान्ते शकुनं तु चतुष्पदम् ॥ ५ ॥

नागंतदनु कृष्णायाश्चतुर्दश्याः परार्धतः ।
पूर्वापरार्धजा विष्टिर्विष्टिरेव दिवानिशोः ॥ ६ ॥

सा त्याज्या त्वन्यथा भद्रा सर्वकर्मसु भद्रदा ।
पुच्छाख्यो दशमो विष्टया अपि तद्वच्छुभावहः ॥ ७ ॥

सा कृष्णात्युन्नतास्थूलहनुगण्डस्थला मुने ।
उग्रदंष्ट्रा दीर्घनासा वह्निनेत्रा महोदरा ॥ ८ ॥

क्रोडी च भीकराकारा सर्वारिष्टकरी तदा ।
लाङ्गूलिनी वह्निलक्ष्मुद्गिरन्ती त्रिपाज्जगत् ॥ ९ ॥

2 1) Compare सू. सि. II 65
4 *b*) M. $D_2$. $B_1$. $B_2$. संस्थितम्
*d*) Be. M. $D_2$. $B_1$. $B_2$. संस्थितम्
5 1) Compare सू. सि. II 68
8 *c*) Ba. Be. $D_1$. An. -गण्डा

सर्वं व्याप्नोति पातोऽपि तद्रूपस्तत्क्रियः क्रमात् ।
द्विपादपुच्छ एवासौ संज्ञाभेदेन वैधृतिः ॥ १० ॥
सप्तदशे सप्तविंशे योगे च स हि वर्तते ।
क्वचिच्च तस्मात्प्रबलः क्वचित्तस्मात्सुदारुणः ॥ ११ ॥
चलांशसंस्कृतार्केन्द्वोस्तदसंस्कृतयोस्तु वा ।
भिन्नैकायनगतयोर्युतौ भार्धेन मण्डले ॥ १२ ॥
क्रान्त्यस्तुल्ये क्रमात्पातो वैधृतश्च सुदारुणः ।
विषुवत्क्रान्तिसाम्यं द्विर्यदा स्युर्द्विविधास्तदा ॥ १३ ॥
द्वितीयः प्रबलः पातो द्विर्भवेदिति निश्चयः ।
क्रान्त्याभिचरतोरेव भास्करेन्द्वोः परस्परम् ॥ १४ ॥
तावदेवास्य पातोऽयं व्यतिपातोऽयमित्यतः ।
अयं प्रसिद्धोऽत्तस्तावदेवास्यापि च सम्भवः ॥ १५ ॥
परस्परं वानुचरतोरर्केन्द्वोः प्रबलोद्भवः ।
स्यात्तदर्थोक्तविषुवे चलसंस्कृतसम्भवे ॥ १६ ॥
अर्केन्दोः पथिके क्रान्तिस्तद्विदा तद्विधे गती ।
अपि ग्रहस्येव कल्प्ये प्राग्गतिश्चेति वक्रता ॥ १७ ॥
मन्दाधिकोनशीघ्रे स्यात्तद्योगो गतगम्यजः ।
अवक्रिणोर्द्वयोरेवं वक्रिणोस्तु विपर्ययात् ॥ १८ ॥

---

10 *b*) Ba. Be. $D_1$. S. An. पुमान्
*d*) Ba. Be. $D_1$. An. वैधृतः
12 *d*) M. $D_2$. $B_1$. $B_2$. भ-
13 *a*) Ba. Be. $D_1$. क्रान्त्येस्तौल्ये
14 After this verse M. $D_2$. $B_1$. $B_2$. S. have the lines.
तस्मिन्प्रग्रहणंत्वह्निर्निर्दिशेत् भुवनत्रयम् ।
एककाष्ठगतं यावदर्केन्द्वोर्मण्डलान्तरम् ॥
16 *a*) Ba. वा चरतो *c*) Ba. Be. -र्धो-
17 *a*) M. $D_1$. $D_2$. $B_1$. $B_2$. An. -कौ
*c*) M. $D_2$. $B_1$. $B_2$. -ति



प्राक्चर्यात्यधिकेऽतीतो भावहीने तु वक्रिणः ।
गत्यन्तरेण तद्वक्रादनुलोमविलोमयोः ॥ १९ ॥
दिनादि वक्रिण्येतस्मिन्भुक्तियोगेन नारद ।
तात्कालिकौ ग्रहौ तेन छेद्यमिच्छामितिर्हरः ॥ २० ॥
स्वभुक्तौ फलमिष्टं वा तौ भवेतां मुहुर्मुहुः ।
क्रान्तिदिनादि गणयन्क्रान्तिसाम्यं विचारयेत् ॥ २१ ॥
क्रान्तिर्यदापनीतेन्दोः शोध्या क्षेपात्तदास्तु सा ।
कल्पौजयुग्मपदजा युग्मौजयदजेति हि ॥ २२ ॥
सूर्यक्रान्त्यधिकोनेन्दोः स्फुटक्रान्तिर्गतैष्यजा ।
पात ओजपदस्था चेद्वामं त्वन्यपदोद्भवा ॥ २३ ॥
परमक्रान्तिजीवाघ्नी क्रान्तिज्यात्रिज्यया फलम् ।
तच्चापान्तरमर्धं वा शताल्पं शीतगोः फलम्[1] ॥ २४ ॥
तत्संस्कृतेभ्यः क्रान्तीतेसमे यावत्पुनः पुनः ।
उपक्रमोपसंहारग्रहान्तरकलादिकम् ॥ २५ ॥
तद्भुक्त्या परमे हीने भावी पातो गतोऽधिके ।
पातश्च मध्यकालश्च क्रान्तिसाम्यमपीति वा ॥ २६ ॥

---

19 *a*) Ba. प्राग्गत्या *b*) M. $D_2$. $B_1$. $B_2$. -नो
*c*) S. तन्मध्या
20 *a*) $D_1$. -धिकत्री- An. -दिवक्रि-
*d*) M. $D_1$. $D_2$. $B_1$. $B_2$. An. -मितेर्हरः
21 *c*) Ba. क्रान्तेः; $D_1$. An. क्रान्ति
22 *b*) Ba. $D_1$. An. स्फुटक्रान्तिर्गतैष्यजा
23 *b*) Ba. शोध्य क्षेपात्तदा तु सा
24 *a*) M. $D_2$. $B_1$. $B_2$. -ज्ययोन; S. ज्यामानं
1) Additional line in S. after this verse is :—
तदर्कराहुभुक्तिघ्नचन्द्रभुक्त्यौ तयोः फलम् ।
26 *a*) M. -क्तौ *d*) Ba. -मथापि

चतुःशती शताल्पा वा ततोऽनल्पार्धमत्र वा ।
क्रान्तिगत्यन्तरं षष्टिर्मानैक्यार्धमितिः फलम् ॥ २७ ॥

इच्छास्थित्यर्धनाडयः स्वमृणं काले च मध्यमे ।
निर्गमश्च प्रवेशश्च पातस्येत्थं विशुध्यताम् ॥ २८ ॥

गत्योरैक्यं चान्तरं वा गत्यन्तरमितीरितम् ।
न चेत्क्रान्त्यन्तरं चादौ वान्तरैक्यं न मानयोः ॥ २९ ॥

स्यादेतत्प्रथमप्रश्ने तूष्णीं गत्यंतरं यतः ।
कथितं तत्क्रान्तिभुक्तिगतैक्यं च न संस्थितिः ॥ ३० ॥

एवं चेद्ग्रहयोर्मध्यं मानैक्यार्धं भवेल्लये ।
स्य( ? स्या )त्तदा समलिप्तौ तौ मध्यकालौ यदापि च ॥ ३१ ॥

क्रान्तिर्न कारणं यस्मात्तस्मादेतन्न सम्मतम् ।
उपायः क्रान्तिसाम्यार्थं कश्चिदत्र निरूप्यते ॥ ३२ ॥

दिग्भेदेऽपीति दिक्तौल्यमेतावत्कल्प्यमेव च ।
प्रज्वलज्ज्वलनाकारे कालेयावत्पतत्यसौ ॥ ३३ ॥

तत्र स्नानेन दानेन दत्तश्राद्धजपादिभिः ।
यत्प्राप्यं सुमहच्छ्रेयस्तत्कालज्ञानतोऽपि च ॥ ३४ ॥

अविशेषेण सर्वाणि नक्षत्राणि व्रतानि तु ।
राज्यर्धव्यापिनक्षत्रे कुर्याद्वा तदुपस्थिते ॥ ३५ ॥

सर्वत्र या याः संनिहिता नाडयस्तास्ताः सुपुण्यदाः ।
त्रिधा विभज्य रात्रिं तां मध्यांशे यत्र तारकम् ॥ ३६ ॥

28 *d*) Ba. Be. $D_1$. S. An. विबुध्यताम्
30 *d*) Be. $D_1$. S. An. सन्निवति
31 *d*) Be. $D_2$. $B_1$. $B_2$. – ले
36 *d*) Be. An. यत्र



उपोषितव्यं यत्र येनास्तं याति भास्करः ।
श्रोणा श्रविष्ठया युक्ता ग्राह्या तद्द्वादशीव्रते ॥ ३७ ॥

ज्येष्ठा श्लेषारेवतीनां पादा अन्त्या भसन्धयः[1] ।
तेषां च तत्परर्क्षाणामन्त्या आद्याश्च षोडश[2] ॥ ३८ ॥

भसन्धयश्च गन्डान्तं सर्वकर्मसु वर्जितम् ।
यथैव लग्नगण्डान्तं नास्ति जीवे बलान्विते ॥ ३९ ॥

तथैव तिथिगण्डान्तं नास्तीन्दौ बलशालिनि ।
प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रतेषु च ॥ ४० ॥

अभावे द्विगुणच्छायाव्यापिन्यां काल इदृशे ।
दिवा नक्तं चरेदर्वाग्व्यापिन्यां वा तथा ततः ॥ ४१ ॥

उपवासदिने रात्रौ स्यान्नक्तं हरिवासरे ।
एकभक्तेन नक्तेन तथैवायाचितेन च ॥ ४२ ॥

उपवासेन दानेन न निर्द्वादशिको भवेत् ।
व्रतं दैवं द्विजं चोक्त्वा न याचेत कुतश्चन ॥ ४३ ॥

मध्याह्नव्यापिनी तद्वदेकभुक्तव्रतं व्रती ।
उपवासदिनेऽप्येवं पूर्वाह्णव्यापिनी मुने ॥ ४४ ॥

38 1) Compare सू. सि. XI 21
2) Additional verse in S. after this is :—
गण्डान्तं कर्किमीनाली लग्नात्स्य नवमाश्च तत् ।
पूर्णाख्यानां तिथीनां च नाड्योऽन्त्या एव तन्मुने ॥
39 *c*) Ba. – न्ते *d*) विनिर्गतिः
40 *b*) Ba. नास्ति दौर्बल्यशालिनी
41 *b*) M. $D_2$. $B_1$. $B_2$. ईदृशः
42 *c*) Ba. M. S. – भुक्तेन
43 *c*) Ba. चैव द्विजे; S. प्रोक्ता *d*) Ba. व्रतं ततः

द्विरात्रव्यापिनी येष्टा व्रते सा तदुपस्थिता ।
ज्येष्ठोपवासे पूर्वविद्धा सा ग्राह्या चास्तगामिनी ॥ ४५ ॥

तदैक्ये परविद्धा तु क्षीयमाणेन तन्मतम् ।
ओजयुग्मे तिथिः पूर्वा परविद्धा च पक्षयोः ॥ ४६ ॥

व्रतोपवासादौ ग्राह्या वृद्धिर्ह्रासावकारणम् ।
पूज्या स्वल्पापि सर्वत्र या तिथिर्वृद्धिगामिनी ॥ ४७ ॥

महत्यपि न सा पूज्या या तिथिः क्षयगामिनी ।
व्रतादौ त्रिमुहूर्तापि स्वीकार्या वृद्धिगामिनी ॥ ४८ ॥

तत्र व्रतादि कुर्वीत वृद्धिर्ह्रासावकारणम् ।
यदा पक्षक्षयं याति तदा स्यादपराह्णिकी ॥ ४९ ॥

उदयास्तगता पूज्या तिथिर्वृद्धिक्षये तिथेः ।
व्रतस्वीकरणस्यैतदुक्तं श्लोकचतुष्टयम् ॥ ५० ॥

गृहीत्वोदङ्मुखं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासं तु गृह्णीयाद्यद्वा सङ्कल्पयेद्बुधः ॥ ५१ ॥

मैत्रे मुहूर्ते एतच्च कार्यं नो चेद् वृथा फलम् ।
आषाढशुक्लैकादश्यां याम्यायनदिनेऽथवा ॥ ५२ ॥

चातुर्मास्यव्रतं सर्वं स्वीकार्यं भुक्तिमुक्तिदम् ।
हविष्यभोजनं स्नानं सत्वमाहारलाघवम् ॥ ५३ ॥

45 *a*) Ba. S. द्यु–; Ba. Be. $D_1$. An. –ज्येष्ठा
*c*) M. $D_2$. S. $B_1$. $B_2$. येष्टो–; M. $D_2$. S. $B_1$. $B_2$. –सिद्धा
46 *c*) S. ओजा युग्मा
47 *b*) Ba. ह्रानी च कारण् ।
49 *a*) M. $D_2$. $B_1$. $B_2$. कुर्वन्ति
52 *b*) S. व्रतम्
53 *d*) Ba. – स्य –; M. $D_2$. $B_1$. $B_2$. – म –
54 *b*) Ba. -भोज्यं



ब्रह्मचर्यमधःशय्यां नक्तभोजी षडाचरेत् ।
दिवा निद्रानृतं द्यूतं ताम्बूलं मद्यमासवम् ॥ ५४ ॥

कांस्यं मांसं मसूरं च चणकोद्रवदूषकम् ।
एकं मधु परान्नं च सुरा क्षौद्रं च मैथुनम् ॥ ५५ ॥

असकृज्जलपानं च लोभं वितथभाषणम् ।
क्षारं प्रतिग्रहं तैलं तिलपिष्टमहंकृतिम् ॥ ५६ ॥

व्यायामं व्यवसायं च कामं क्रोधं मदं तथा ।
दम्भं मोहं च मात्सर्यं तिलमुद्गादिभक्षणम् ॥ ५७ ॥

पुनर्भोजनमभ्यङ्गं षट्त्रिंशच्च महामुने ।
उपवासदिनात्पूर्वापराह्ने च विवर्जयेत् ॥ ५८ ॥

असकृज्जलपानं वा कुर्यात्पूर्वापराह्णयोः ।
एकादश्यां निराहारः स्थित्वा ह्नि परेत्वहम् ॥ ५९ ॥

भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ।
अज्ञानतिमिरान्धस्य व्रतेनानेन केशव ॥ ६० ॥

प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव ।
सङ्कल्प्य पारणं चेति मन्त्राभ्यां क्रमशो मुने ॥ ६१ ॥

एकादशीं प्रति स्त्रीणां शूद्राणामप्ययं विधिः ।
त्रयोदशीं च दशमीं कृष्णप्रतिपदं मुने ॥ ६२ ॥

रात्रिद्वयव्यापिनीं तां स्वीकुर्यात्सततं मुने ।
घटिकैकाप्यमावस्या स्याच्चेत्प्रतिपदिष्यते ॥ ६३ ॥

55 *b*) Ba. चणकं कोद्रवं तथा *c*) $D_2$. $B_1$. $B_2$. पूर्णं
*d*) M. $D_2$. $B_1$. $B_2$. सुधा
56 *c*) S. क्षौरं
59 *d*) Ba. चैव परेऽह्नि
62 *c*) Ba. $D_1$. An. -शी; Ba. S. -मी *d*) Ba. – द्वा
...7

सैव व्रतोपवासादौ परविद्धा हि सोत्तमा ।
तृतीयां पौर्णिमां तद्वत्पूर्वविद्धां मुनीश्वर ॥ ६४ ॥

इमास्तिस्रः पूर्वविद्धा अपि वा तदसम्भवे ।
द्वादशी पूर्वविद्धैव सर्वदा मुनिसत्तम ॥ ६५ ॥

व्रतादौ पूर्वविद्धैव भवेत्कृष्णचतुर्दशी ।
कृष्णाष्टमी क्षीयमाणे यद्येतेनान्यथा मुने ॥ ६६ ॥

व्रतादौ क्षीयमाणस्तु परविद्धोऽसितेऽस्मरः ।
ग्राह्यः शुक्लो वर्धमान इति वा नान्यथैव तु ॥ ६७ ॥

शुक्लतृतीया वैशाखे पूर्वविद्धैव साक्षया ।
विनायकचतुर्थी च तथा भाद्रपदामला ॥ ६८ ॥

मध्याह्ने त्वनतिक्रान्ते यद्येवं स्यान्मुनीश्वर ।
स्वीकुर्यादुपवासेऽपि तद्विधानात्तदुत्तमे[1] ॥ ६९ ॥

ते चापराह्णव्यापिन्यौ परविद्धे सुशोभने ।
दिने पूर्वार्धगामिन्यौ कलयावसरे इमे ॥ ७० ॥

तयोः सत्योश्चापराह्णव्यापिन्यावपि तेन हि ।
तृतीयाद्यं षडंशं तु पूर्वं व्याप्यैव दूषयेत् ॥ ७१ ॥

अपराह्णस्योर्जशुक्लचतुर्थी नागसंज्ञिता ।
परोपवास एवं चेन्न चेत्पूर्वैव गृह्यते ॥ ७२ ॥

नास्मिन्विचार्ये हानिवृद्धी चतुर्थ्यन्या तु नेदृशी ।
अत्यल्पमतिवेधाय वोपवासाय चाप्यलम् ॥ ७३ ॥

66 *c*) Ba. –माणा
67 *c*) Ba. शुक्ले
68 *d*) Ba. –दे–
69 1) This line occurs in all mss. other than Ba. after 64
71 *b*) Ba. स्योश्चापि



तदन्ते पारणं तच्चेत्प्रदोषव्यापि तत्र च ।
सर्वमन्यद् व्रतं काम्यं नित्यमेकादशीव्रतम् ॥ ७४ ॥

पुण्याङ्गनां विना योनिजातिभेदोऽत्र नोच्यते ।
यदैव वा व्रतं कुर्याज्जीवेद्भर्तर्युपोष्य चेत् ॥ ७५ ॥

पत्युरायुः क्षयं कृत्वा स्वयं च नरकं व्रजेत् ।
पत्युरा भोजनात् स्त्रीणां भोजनत्याग एव हि ॥ ७६ ॥

व्रतं शुश्रूषणं तस्य तदाज्ञापालनं चरेत् ।
कामाकामकृतं पापमार्द्रशुष्केन्धनं क्रमात् ॥ ७७ ॥

भस्मसात्कुरुते वह्निरेकादश्युद्भवो मुने ।
यावन्त्यश्नाति सिक्थानि मोहाद्वा हरिवासरे ॥ ७८ ॥

व्याधितो वापि तावन्ति व्रजेत्पापानि नारद ।
प्राशयेन्नवनीतं वा नैकादश्यां शिशूनपि ॥ ७९ ॥

योगिनोऽपि महात्मानो नाश्नन्त्यस्या व्रते रताः ।
एकादश्युपवासेन म्रियते यदि मानवः ॥ ८० ॥

क्षुधार्तः शिवसालोक्यं गच्छेन्निष्कल्मषो मुनेः ।
विस्मृत्यैकादशी मोहाद्द्वादशी परतः स्थिता ॥ ८१ ॥

उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम्
शोके वा यदि वा मोहे हर्षे वा समुपस्थिते ॥ ८२ ॥

सूतके मृतके वापि न त्याज्यं द्वादशीव्रतम् ।
सूतकान्ते हरिं विप्रान्भोजयेदर्चयेत्स्वयम् ॥ ८३ ॥

75 *c*) Ba. यदा नारी
77 *a*) Be. $D_1$. An. तस्याः
81 *b*) Ba. An. –षं *c*) Ba. –शीं
82 *d*) Ba. Be. वर्षे

एवं चोपवसेद्विष्णुं विप्रांश्चान्यांश्च पूजयेत् ।
काम्यव्रतेषु सर्वेषु सर्वत्र च विधिस्त्वयम् ॥ ८४ ॥

तथापि गणयेत्काम्यं न तथाकृतमेव तु ।
असामर्थ्ये शरीरस्य काम्यव्रत उपास्थिते ॥ ८५ ॥

पुत्रं वा धर्मपत्नीं वा कारयेन्मुनिवल्लभ ।
पत्नीव्रतं पतिः कुर्यादसामर्थ्ये तयोः सुतः ॥ ८६ ॥

अन्यथा व्रतभङ्गेन त्वौषधैश्चैव सूतकैः ।
यः कुर्यात्पुत्र वित्तादिकाम्य एकादशीव्रतम् ॥ ८७ ॥

आ व्रतोद्यापनात्तस्य नामानि त्रीणि नारद ।
पुत्रवान्धनवान्मुक्तः पर्यायास्तेष्वनेकशः ॥ ८८ ॥

दिनक्षयेऽपि संक्रान्त्यां ग्रहणे चन्द्रसूर्ययोः ।
एकादश्यां तु कृष्णायां शुक्रार्कदिवसे गृही ॥ ८९ ॥

न पारणं नोपवासं कुर्यात्पाते च मन्मते ।
एकादशीव्रतस्यैव लक्षयित्वा यथोचितम् ॥ ९० ॥

नामभिस्त्रिभिरुक्तैश्च कथ्यते सकलव्रते ।
उक्तदोषेषु चानुक्तवेधेषु व्रतमाचरेत् ॥ ९१ ॥

व्रतं तत्पारणाहात्प्राक्तिथिसंख्यानि हन्ति च ।
तेषु नक्तं हविष्यान्नमनोदनफले तिलाः ॥ ९२ ॥

क्षीराज्याद्यं पञ्चगव्यं प्राणायामत्रयं क्रमात् ।
एवं यदैव वा गच्छेदुत्तरोत्तरमुत्तमम् ॥ ९३ ॥

84 *a*) Ba. विधिनोपवसे-
85 *c*) Ba. शरीरश्चेत् *d*) Ba. -मुपस्थितम्
86 *a*) Ba. पुत्रेण धर्मपत्न्या
90 *b*) M. $D_2$. $B_1$. $B_2$. मन्मथे
91 *b*) Ba. Be. $D_1$. An. सफलं व्रती



व्रतभङ्गो हि नैवं चेद् व्रतं नैक उपस्थिते ।
अन्यं कुर्वीत दानार्चा होमैरन्यं च वर्तयेत् ॥ ९४ ॥

ब्रह्मचारी वनस्थश्च मुमुक्षुर्यतिरित्यपि ।
वाच्यः सर्वाश्रमस्थोऽपि कुर्वन्नित्यव्रतं मुने ॥ ९५ ॥

न तस्य सन्त्युक्तदोषा यत्तभक्ष्यं च नोचितम् ।
परविद्धोत्तमा कार्या नारदैकादशी तिथिः ॥ ९६ ॥

पूर्वविद्धापि सा ग्राह्या परतो द्वादशी न चेत् ।
शुद्धाधिका विद्धसमा चोत्तरानधिका यदि ॥ ९७ ॥

पूर्वा पुण्या गृहस्थानां यातीनामुत्तरा स्मृता ।
विद्धाधिकोत्तरा हीना व्यवस्थेयं यदिष्यते ॥ ९८ ॥

उत्तरानुक्तरूपा सा सर्वेषामुत्तरैव चेत् ।
शुद्धा हीना शुद्धसमा विद्धहीना च नारद ॥ ९९ ॥

सर्वेषामविशेषेण पूर्वैव फलदायिनी ।
फाल्गुनद्वादशी पुष्ययुक्ता गोविन्दसंज्ञिता ॥ १०० ॥

शुक्ला गोद्वादशी तु माघे भीमाभिधा स्वयम् ।
आषाढे शयनाख्या स्यात्प्रबोधाख्या च कार्तिके ॥ १०१ ॥

एकाब्दद्वादशीपुण्यं पञ्चैता दद्युरेकशः ।
पारणं द्वादशीविद्धत्रयोदश्यां निहन्ति च ॥ १०२ ॥

द्वादशद्वादशीपुण्यं परोर्धाया प्रयच्छति ।
सिंहार्के रोहिणीयुक्ता कृष्णा भाद्रपदाष्टमी ॥ १०३ ॥

94 *a b*) Ba. चेदव्रतं
98 *c*) Ba. $D_1$. $D_2$. $B_1$. $B_2$. वृद्धा-
103 *b*) Ba. Be. An. परार्धायां
104 *b*) S. $B_2$. जयन्ति

राज्यर्धपूर्वपरगा जयन्ती कलयाऽपि वा ।
अभावे रोहिणीयुक्ता नभःकृष्णाष्टमी यदि ॥ १०४ ॥

मुहूर्तमपि वा सेष्टा सैवाभावे तिथिर्मता ।
कार्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ॥ १०५ ॥

अविद्धा केवला सा चेदिति वेदविदो विदुः ।
मध्यरात्रिगता माघे शिवरात्रि चतुर्दशी ॥ १०६ ॥

कृष्णपक्षे जयन्ती च नोपेक्ष्ये विदिते अपि[1] ।
नरस्य द्विगुणां छायामतिक्रम्य यदा रविः ॥ १०७ ॥

तदा सौरं चरेन्नक्तं न नक्तं निशि भोजनम् ।
दिनद्वयेऽप्यमावास्या मध्याह्नव्यापिनी यदि ॥ १०८ ॥

दैवे पित्र्ये व्रते ग्राह्या क्रमात्पूर्वापरापि च ।
अमा दूष्या भूतविद्धा मध्याह्नव्यापिनी न चेत् ॥ १०९ ॥

ग्राह्यामा भूतविद्धापि पूर्वाह्णे प्रतिपद्यदि ।
पूर्वमध्यापराह्णेषु देवमर्त्यपितॄन्यजेत् ॥ ११० ॥

द्विगुणात्माधिकच्छाये चतुर्थे प्रहरेऽधमः ।
यः श्राद्धं कुरुते याति नरकं स तदा ध्रुवम ॥ १११ ॥

---

105 *a*) Ba. श्रेष्ठा
106 *a*) Ba. अभावे
107 *a*) M. $D_1$. $D_2$. $B_1$. $B_2$. कृष्णे पक्ष
1) Additional lines in S. after this are :—
दिनद्वयेप्यर्धरात्रे क्षपरात्रियंदा तदा ।
ग्राहयेत राजयन्ती च सचानैवं विभाशि च ॥
दिनद्वयेपि नानोचे वर्धरात्रेर्मुनीश्वर ।
अकस्तिकालिकौ ग्राह्या जयन्ति न तदा भवेत् ॥
110 *b*) Ba. $D_1$. मध्याह्ने
111 *b*) Ba. नरः



अतोऽपराह्णव्यापिन्यां पूर्वस्यां तु तिथिक्षये ।
कुर्वीत पार्वणश्राद्धं सर्वतिथ्या व्रतेतरे ॥ ११२ ॥

दिनद्वयेऽपि सा नो चेदपराह्णे मुनीश्वर ।
साल्पापि परविद्धेष्टा कुतुपेसास्ति किं ततः ॥ ११३ ॥

शुक्रलग्नं शुक्रवारं त्यजेच्छ्राद्धेषु जन्मभम् ।
आमश्राद्धं दैविकं तु पूर्वाह्णे ग्रहणे निशि ॥ ११४ ॥

पूर्वाह्णे लग्नकाले वा वृद्धिश्राद्धं विधीयते ।
निशापि पुत्रोत्पत्या(? त्त्या)दि निमित्तं श्राद्धमिष्यते[1] ॥ ११५ ॥

विना प्रातरादिनार्धादेकोद्दिष्टं विधीयते[1] ।
अन्नेन वा हिरण्येन श्राद्धं माध्याह्निकं विदुः ॥ ११६ ॥

चतुर्दश्येव वर्ज्या स्यात्काम्ये नित्ये च पैतृके ।
एतयोस्ति थिवारर्क्षमन्यत्सर्वं च पूज्यते ॥ ११७ ॥

प्रत्यब्दं प्रतिमासं वा मृताहःश्राद्धकर्मसु ।
सायन्तन्युत्तराभावे पूर्वासिद्धा पराह्णिकी ॥ ११८ ॥

सायन्तनीया भावे स्यात्परविद्धैव शस्यते ।
नित्यनैमित्तिकश्राद्धदर्शश्राद्धादि चेतरत् ॥ ११९ ॥

अधिमासे न कर्तव्या सेवाद्यदेवतादिषु ।
नभस्य कन्याथोर्ध्वार्धभागयोगेऽभिधीयते ॥ १२० ॥

---

112 *d*) Ba. Be. S. तिथ्यां; Be. $D_1$. An. -रथे
113 *d*) Ba. Be. $D_1$. An. कुरुते; Ba. स्वस्तिकं
114 *a*) Ba. Be. शुक्राद्यं शुक्रवारं च; M. $D_1$. $D_2$. $B_1$. $B_2$. शुक्राद्यंशं शुक्रवारं
115 1) Line missing in S.
116 1) Line missing in S.
117 *c d*) S. वारर्क्षादितत्सर्वत्र
118 *d*) Ba. S. पूर्वविद्धा
120 *a*) Ba. कर्तव्यं *b*) सेवाद्यं
*c*) Ba. कन्यको-

श्राद्धं त्वपरपक्षाख्यं नभस्योर्ध्वदलेऽन्यथा ।
मीने धनुषि सिंहेऽर्के न व्रतारभ्म(?म्भ) इत्यपि ॥ १२१ ॥
माघे मासि न सिंहेज्ये चेति केचिन्न तन्मतम् ।
ऋतेऽन्नदानग्रहणं व्रतं कार्यं मनीषिभिः ॥ १२२ ॥
सूतके मृतके वापि केचिदार्तव एव च ।
षुनः पुनः शुभः कालः सूर्यग्रहणसुव्रते ॥ १२३ ॥
सोमग्रहणकृत्येषु श्लाघ्यः कालः परः परः ।
नाद्याद्यामत्र यादर्वाग्ग्रहणे चन्द्रसूर्ययोः ॥ १२४ ॥
विशुद्धमण्डलं दृष्ट्वैवोर्ध्वं वा प्रहरत्रयात् ।
रात्रौ स्नानं न कर्तव्यं दानहोमबलिक्रियाः ॥ १२५ ॥
प्रतिष्ठाजातकोद्वाहयज्ञग्रहणवर्जितम् ।
मध्यन्दिने पर्वसन्धिस्ततः पूर्वमथापि वा ॥ १२६ ॥
यागस्तद्दिवसे कार्यः परतश्चेत्परेऽहनि ।
सन्धिश्चेत्सङ्गवादूर्ध्वं प्राक्पर्यावर्तनाद्रवेः ॥ १२७ ॥
सा पौर्णमासी विज्ञेया सद्यःकालविधौ विधिः ।
यागात्पूर्वदिने कुर्यादन्वाधानं द्विजोत्तम ॥ १२८ ॥
अन्वाधानं तु सङ्कल्यः प्राणायामपुरःसरः ।
अन्वाधानं पाकहोमं नित्यहोमादनन्तरम् ॥ १२९ ॥
कुर्यान्नैमित्तिकं कर्मानन्तरं नित्यकर्मणः ।
पर्वण्यौदयिके कुर्युः श्रावणं तैत्तिरीयकाः ॥ १३० ॥

123 *c*) Ba. Be $D_1$. An. पूर्वः पूर्वः
*d*) Ba. Be. $D_1$. An. सूतके
124 *a*) Ba. कालेषु
127 *c*) M. $D_2$. $B_1$. $B_2$. –मादूर्ध्वं
130 *d*) श्रावणीं



बह्वृचः श्रवणे कुर्युः सस्यसंपत्तिदर्शने ।
विशिष्टः श्रावणो मासः स्वाध्यायानामुपक्रमे ॥ १३१ ॥
तद्दर्शोपात्तदर्भैस्तु कुर्यात्कर्माणि वत्सरम् ।
अयने विषुवे चैव शयने बोधने हरेः ॥ १३२ ॥
अनध्यायं प्रकुर्वीत मन्वादिषु युगादिषु ।
कार्तिके नवमी शुक्ला तृतीया माधवे तथा[1] ॥ १३३ ॥
माघे मन्वादयः कृष्णे नभस्ये च युगादयः[1] ।
अश्वयुक् शुक्लनवमी कार्तिके द्वादशी तथा[2] ॥ १३४ ॥
चैत्रे तृतीया ज्येष्ठस्य पौर्णिमा द्वादशी शुचौ[1] ।
चतस्रः फाल्गुने द्वादश्यूर्जे कृष्णाष्टमी मुने[2] ॥ १३५ ॥
मन्वन्तरादयस्तेषु तेषामेवोद्भवः क्रमात्[1] ।
नभः फाल्गुनपौषाणाममा चैकादशी सिता[2] ॥ १३६ ॥
वैशाखज्येष्ठपौषाणां पौर्णिमा फाल्गुनोर्जयोः[1] ॥
माघामलद्वादशी च नभस्यामलचन्द्रिका[2] ॥ १३७ ॥
शुचिस्त्रिंशोऽष्टमी कृष्णाद्वितीयाश्वयुजेऽमला[1] ।
मन्वन्तरान्तस्तेषामेष्वनध्यायेषु निर्गमः[2] ॥ १३८ ॥
यथा ज्ञमजनो मन्त्री राजानं प्रतिगच्छति ।
तथा मन्वादयः सर्वे ब्रह्माणमुपतस्थिरे ॥ १३९ ॥
तिस्रोऽष्टका अनध्यायः सप्तम्याया मुनीश्वर ।
पर्वगादिषु मासेषु विषुवायनसंयुताः ॥ १४० ॥

133 *d*) M. $D_2$. $B_1$. $B_2$. An. कृता 1) Missing in S.
134 1, 2) Missing in S.
135 1, 2) Missing in S.
136 1, 2) Missing in S. *c d*) Ba. An. फाल्गुनयोः षण्णामेका
137 1, 2) Missing in S.
138 1, 2) Missing in S.
140 *c*) Be. M. $D_2$. S. $B_1$. $B_2$. पवर्गा–

प्रशस्ता इति पञ्चाशत्तिथयः पार्वणे मुने ।
उपक्रमाच्च त्रिदिनं क्षपाः पञ्चदशापि च ॥ १४१ ॥

उपक्रमेण पर्यन्तपौष उत्सर्जनात्परम् ।
रात्रयः शुक्लपक्षेषु कृष्णपक्षेषु कृत्स्नशः ॥ १४२ ॥

अनध्यायास्तथान्ये ते ये च वृद्धप्रचोदिताः ।
तथा सेयं मुहूर्ताढ्या यानध्यायस्य सापि च ॥ १४३ ॥

अङ्गाध्ययन इत्युक्तः स्वाध्यायाः सकला अपि ।
अधिकर्तव्यमेवाङ्गमङ्गित्वैकप्रयोजनात् ॥ १४४ ॥

शुचेस्तद्व्यतिरेकेण त्वङ्गित्वाभावसम्भवात् ।
पक्षादिमध्यान्त्योपान्त्या अङ्गानामङ्गिनामपि ॥ १४५ ॥

अनध्यायः प्रदोषश्च संध्यात्रिर्मध्यमा निशा ।
त्रयोदशी चतुर्थी च सप्तमी कलयापि वा ॥ १४६ ॥

रात्रिं स्पृशति मौनी स्यात्प्रदोषो यदि तत्र सः ।
रात्रेर्दिनचतुर्थो वा प्रहरः कथ्यते बुधैः ॥ १४७ ॥

तावानेव प्रदोषश्च पूर्वत्र्यंशस्तु कैश्चन ।
आद्यत्र्यंशान्तनाडी वा चतुर्थी त्वितरे मुने ॥ १४८ ॥

प्रदोषः पूर्वरात्र्यर्धं विरामघटिकापि वा ।
मध्यन्दिने पर्वसन्धिरित्यादिषु न चिन्तयेत् ॥ १४९ ॥

दिनक्षपायुक्तदोषं श्लोकानां त्रिगुणाऽष्टसु ।
अर्कमानकलास्तस्य भुक्तिश्चेत्षष्टिनाडिकाका ॥ १५० ॥

---

141 *d*) Ba. पक्षाः
143 *c*) S. सापादद्विमुहूर्ताभ्यां
148 *b*) पूर्वैस्त्रिंशांशकैर्मुने
*c*) Ba. आद्यास्त्रिंशांशनाड्यश्च
150 *a*) M. $D_2$. $B_1$. $B_2$. -क्षयाद्युक्तदोषान्



सङ्क्रान्तिकालस्तद्बिम्बं यावत् क्षेत्रद्वयेऽपि सः ।
बिम्बमध्यं ग्रहस्यास्ते यत्र तत्र स्थितश्च सः ॥ १५१ ॥

तस्मिन्परापरक्षेत्रे ग्रहे द्विस्थे यथोच्यते ।
भुक्तक्षेत्रमभुक्तर्क्षं न तथा न्यत्र नारद ॥ १५२ ॥

तिथिनक्षत्रयोगादेर्बिम्बमध्यं प्रबोधकम् ।
शुभाशुभकृतस्तस्मान्नैव चेत्तद्वृथाफलम् ॥ १५३ ॥

सङ्क्रान्तेः प्रागभुक्तर्क्षं सार्धाः षोडश नाडिकाः ।
भुक्तक्षेत्रं च तावत्यः पश्चादिति हि नाडिकाः ॥ १५४ ॥

त्रयस्त्रिंशत्सङ्क्रमस्य सर्वकालस्य नारद ।
या याः संनिहिता नाड्यस्तास्ताः पुण्यतमा मताः ॥ १५५ ॥

भुक्तर्क्षे वाप्यभुक्तर्क्षे स्नानदानादि कारयेत् ।
पर्याप्तमुभयं रात्रावेव चेत्तदयोच्यते ॥ १५६ ॥

भवनान्तं बिम्बमध्यं रात्र्यर्धात्प्रागुदेति चेत् ।
स्नानदानादि मध्याह्नात्कुर्यादूर्ध्वं गते दिने ॥ १५७ ॥

रात्र्यर्धादुपरि क्षेत्रं याति चेदन्यथार्यमा ।
अह्न्यागामिनि मध्याह्नात्पूर्वं स्नानादि कर्म यत् ॥ १५८ ॥

यद्यर्धरात्र एव स्यात्संपूर्णे रविसङ्क्रमः ।
तदा दिनद्वयं पुण्यं स्नानदानादि कर्मसु ॥ १५९ ॥

भुक्तक्षेत्रमभुक्तर्क्षं चोभयं चेद्दिवास्ति वा ।
याम्यायनं विष्णुपदं चाभुक्तर्क्षेऽतिपुण्यदम् ॥ १६० ॥

षडशीतिमुखं चोदगयनं भुक्तवेश्मनि ।
विषुवत्युभयं तुल्यं सर्वमेतत्तु नान्यतः ॥ १६१ ॥

चलसंस्कृततिग्मांशोः सङ्क्रमो यः स सङ्क्रमः ।
नान्योऽन्यत्र च तत् क्षेत्रं नैति तत्क्रान्तिकक्ष्यया ॥ १६२ ॥

भुक्तक्षेत्रमभुक्तर्क्षं वा विहायाह्नि सम्भवम् ।
वृथान्यत्र कृतं कर्म भस्मनीव हुतं हविः ॥ १६३ ॥
तदभावे तदासन्ने काले चापि वृथेतरत् ।
क्रान्तेः पूर्णफलं त्वर्धं प्रवेशादुभयोः समम् ॥ १६४ ॥
कालस्य निर्णयो ह्येतन्मृगकर्क्योः क्षपादले ।
अर्काह्नि शुक्लसप्तम्यां पुष्यर्क्षे चोत्तरायणे ॥ १६५ ॥
सप्तमीव्रतमन्विच्छेत्सर्वकामार्थसिद्धये ।
अष्टमीनवमीद्वन्द्वे ह्यर्धनारीश्वरं व्रतम् ॥ १६६ ॥
नभस्ये रोहिणी षष्ठी व्यतीपाते यदीरिते ।
पुण्या कपिलषष्ठीह द्वादशी विजया हरौ ॥ १६७ ॥
श्रोणामार्के व्यतीपाते दिवा पौषी यदा भवेत् ।
अर्धोदयं पुण्यराशेर्हरत्यर्धमुपेक्षितम् ॥ १६८ ॥
योगरूपाः पुण्यकालास्तिथ्यादीनां मुनीश्वर ।
कथ्यन्ते तेन येष्वस्ति वेधदोष इति स्थितिः ॥ १६९ ॥
अलं मुहूर्तमात्रं वा स्नानादिभ्यो हि योगजम्[1] ।
रात्रौ दिवा पञ्चदशो मुहूर्तः कुतपोऽष्टमः[2] ॥ १७० ॥
मैत्रस्तृतीयोऽह्नः पुत्र पुन्नक्षत्राणि रोहिणी ।
अश्विनी कृत्तिका हस्तो मैत्रं पुष्यः पुनर्वसुः ॥ १७१ ॥
प्रोष्ठपद्द्वितयं विष्णुः केचित्सौम्यमिति स्थितिः ।
इति ते कथितं वत्सान्यच्च वक्ष्यामि तत्वतः[1] ॥ १७२ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
तृतीयोऽध्यायः ॥ २ ॥

168 *b*) Ba. ह्यमा
170 1, 2) Missing in $D_2$. $B_1$. $B_2$.
172 1) This line occurs only in Ba.

## चतुर्थोऽध्यायः ।

अविक्षेपः स्फुटक्रान्तेरुदक् क्षिप्तस्ततः पुरः ।
उदेति पश्चादेत्यस्तमवाक्षिप्तस्तथान्यथा ॥ १ ॥
पश्चिमस्थः प्रागुदेति पश्चात्प्राक्स्थोऽस्तमेति हि ।
अन्यथा चेदन्यथा दृक्कर्म यत्कल्पितं तथा ॥ २ ॥
विक्षेपस्तत्फलं स्याद्यद्यक्षभा द्वादशाङ्गुलम् ।
खमध्यग्रहयोर्मध्यं नतं क्षितिजकल्पना[1] ॥ ३ ॥
तन्नतात्तद्दिनार्धं च फलं प्राक् सिद्धमेव हि ।
ग्रहणादन्ययोगे च कालभालग्नसाधने ॥ ४ ॥
शृङ्गोन्नत्युदयास्तेषु दृक्कर्मादाविदं स्मृतम् ।
क्रमचापोत्क्रमज्याभ्यां क्रान्तिः सत्रिग्रहस्य च ॥ ५ ॥
त्रिज्या चेन्मध्यदृष्टानां क्षेपलिप्तान्तरे पुनः ।
दृक्कर्मस्थानतः प्राक्स्थ इव पश्चादिति स्थितः ॥ ६ ॥
दृश्यक्षेपः क्रान्तिदिशोर्भेदाभेदे यथा क्रमम् ।
तत्तन्मेरुदिगंशानामल्पः स्याद्दृश्यते तथा ॥ ७ ॥
स्खलनं मध्यकक्षायामधिकं स्वल्पमन्यगम् ।
तदर्धमुत्क्रमज्यैषा तादृक् खण्डैर्हि सान्विता ॥ ८ ॥
द्वादशीज्या समैः खण्डैरुत्क्रमं धनुरुत्तमम् ।
अल्पत्वात् स्खलनस्यैवं क्रमचापं स्मृतं त्विह[1] ॥ ९ ॥

3 1) Additional line in S. after this verse is :—
खमध्ये नास्ति दृक्कर्म चात्रानास्ति यतस्ततः ।
4 *d*) Ba. – भेदे तथैव हि
9 *c*) An. अत्यल्प; वलन– 1) Missing in $D_1$.

त्रिभदानं मध्यमार्गे महत्स्खलनसूचकम् ।
क्रान्तिक्रान्त्यूनपरमं क्रान्त्योस्त्वेवं तदल्पतः ॥ १० ॥

द्वितीयं पापदृष्टीनां दृक्कर्म मुनिसत्तम ।
द्वितीयमेव दृक्कर्म नेच्छन्त्युत्तमदृष्टयः ॥ ११ ॥

शास्त्रीयव्यवहारो हि लौकिकं निष्प्रयोजनम् ।
केचिदन्येऽपि नेच्छन्ति तादृक्प्रत्यक्षकारणात् ॥ १२ ॥

खमध्यस्थो मध्यलग्नमुदयात् क्षितिजोदयः ।
अस्तलग्नं सषड्भं तात्कालिकं स्वेष्टकालिकात् ॥ १३ ॥

गतागतैष्य कालाच्च गतैष्यं लग्नमात्मज ।
लङ्कोदयैर्मध्यलग्नं स्वमध्ये क्षितिजं न हि ॥ १४ ॥

लग्नग्रहाभ्यां कालश्च मुहुर्मुहुरिति स्थितिः ।
सूर्यात्प्राक्पश्चिमार्धस्थे शुक्लकृष्णे प्रकल्पयेत् ॥ १५ ॥

सूर्यास्तकालिकौ सूर्याद्ग्रहौ कृत्वा सषड्ग्रहौ ।
ततस्तत्काललग्नार्थं कृष्णे त्वर्के तु षड्भवान् ॥ १६ ॥

अर्कात्तदन्तरप्राणैर्भास्करास्तमनात्परम् ।
स्थिरीकृतैरुदेत्यन्यः शुक्ले कृष्णेऽस्तमेति हि ॥ १७ ॥

दिनरात्रिग्रहाः पूर्वापरभार्धोदयाः स्वकाः ।
आसन्नार्कस्य तद्रश्मिच्छन्नो मूढ इतीरितः ॥ १८ ॥

शुक्ले प्रागुदितः प्राणात्कालांशाः षष्टिभाजिताः ।
कृष्णे तु तौ सषड्भौ तु भास्करोदयकालिकौ ॥ १९ ॥

---

10 *a*) M. $D_2$. $B_1$. $B_2$. त्रिभेदानां
16 *b*) Ba. Be. M. $D_2$. $B_1$. $B_2$. सषड्गृहौ
*d*) Ba. सषड्भकात्



कार्याः कालांशकास्तद्वदनर्कास्ते सकृद्वयोः ।
सूर्यात्पश्चिमतोऽत्यन्तं यातु यः सक्षमः स तु ॥ २० ॥

कृष्णेऽस्तमुदयं शुक्ले गच्छन्त्यन्येऽन्यथा मुने ।
द्वादशात्यष्टिमन्वीशदिक्तिथिः शीतगोः क्रमात् ॥ २१ ॥

अस्तांशा द्वादशाष्टौ च वक्रिणोर्बुधशुक्रयोः ।
तथा महत्त्वादनयोर्दूरत्वादितरस्य च ॥ २२ ॥

मूलत्रयं विशाखार्द्रा मित्रदस्रा हि वह्नयः ।
दृश्यन्ते पञ्चदशभिः शेषाण्यत्यष्टिभागकैः ॥ २३ ॥

मघा चतुष्कं श्रवणद्वयं धाता भवासवैः ।
पुनर्वस्वभिजिच्चात्र मृगव्याधः प्रभञ्जनः[1] ॥ २४ ॥

अगस्त्यो ब्रह्महृदयं शक्रांशैरनलेन्दुभिः[1] ।
मृगशीर्षं च भरणी पुष्यास्त्रिः सप्तकांशकैः[2] ॥ २५ ॥

तत्वाधिकः स यस्योदक् क्षेपांशा नास्तगो भृशम् ।
एभ्योऽधिकोनैः कालांशैः क्रमाद्दृश्या अदर्शनाः ॥ २६ ॥

तदन्तरा दिनादिः स्यात्कालगत्यन्तरैक्यजम् ।
तत्कालस्वोदयप्राणा स्वांशराशिकलामितिः ॥ २७ ॥

फलेच्छया तत् क्षेत्रांशैर्दृश्यत्वाद्दृश्यतापि वा ।
सैक व्येकोदितास्तांशैर्दृक् सिद्धं स्यात् कचिन्मुने ॥ २८ ॥

---

20 *a*) Ba. यातुर्यः
23 *a*) Ba. $D_1$. An. मूला-
24 1) Missing in S.
25 1, 2) Missing in S. *d*) Ba. पुष्योऽत्रिः
26 Ba. – कांशा 1) Compare सू. सि. IX 9
27 *c*) Ba. $D_1$. प्राणा *d*) M. $D_2$. S. $B_1$. तां-
28 *a*) M. $D_2$. $B_1$. $B_2$. छायाफलं

अल्पायुषां पाखण्डिनां गन्धर्वनगरादिवत् ।
खमध्यक्षितिजे दोःकोट्याश्रयैर्मौर्विके तयोः ॥ २९ ॥

दृग्भाशङ्कुर्मुने छाया व्यवहार इतीर्यते ।
त्रिज्या भवेच्छाया यदि कर्णोऽत्र कोटिजा ॥ ३० ॥

लम्बज्यायां कोटिजीवां परमांयां तु सोद्भवा ।
त्रिज्यायां कोटिजीवायां कियतीति विशेषता ॥ ३१ ॥

परिधिः वियतीत्येव शङ्कुच्छेद इतीरितः ।
स्वदिनव्यासार्धकर्णौ तौ त्त शङ्कौ स एव च ॥ ३२ ॥

कियान्स तस्मिंस्त्रिज्यायामुन्नतज्येति साधिता[1] ।
त्रिज्याधिकोनोदगर्काच्चरमौर्व्यन्त्यमौर्विका[2] ॥ ३३ ॥

मध्यक्षितिजमध्यज्या सा नतज्योन्नतोदिता ।
तदुत्क्रमधनुः प्राणा नतप्राणाः प्रभायते ॥ ३४ ॥

व्यासार्धे लब्धजीवायां च समा मुने ।
कल्प्यः शङ्कुस्तदा तत्सत्रिज्यश्चेद्द्वादशाङ्गुलः ॥ ३५ ॥

छायाकर्णौ वा दिनार्धे क्रान्त्यक्षाभ्यां भुजांशकैः ।
शङ्क्वन्त्यून बिम्बार्धयुवा छाया नतासुभिः ॥ ३६ ॥

कृष्णे शुक्लेऽपि पक्षे प्रागिनेन्द्वोश्चेन्न भिद्यते ।
तज्ज्योनं च दिनार्धाप्तं नतघ्नं चापि तत्किल ॥ ३७ ॥

अनुक्तं यत एवैतदन्य प्रश्नचतुष्टये ।
अबिम्बकस्तु दर्शेऽधः स्थितः सूर्यान्न दृश्यते ॥ ३८ ॥

पौर्णिमायां तदन्तःस्थैः सम्पूर्णः सूर्यरश्मिभिः ।
अन्यत्र यावान्विप्रकर्षस्तावच्छुक्लं विधोर्विधिः ॥ ३९ ॥

---

32 *d*) M. $D_2$. $B_1$. $B_2$. चार्कशङ्कौ
*d*) S. लम्बयाप्राङ्गुलाधिका
33 1, 2) Missing in Be. $D_1$. An.



चन्द्रायत्र तदाशायां शृप्तो दक्षिणे यः शशी ।
अङ्गाध्यायी शौनकस्य मेरुवासीत्यतः समम् ॥ ४० ॥

हानिवृद्धी ययौदक्षवरेणास्य तिथिं प्रति ।
क्षीयमाणां कलां देवा अश्नन्त्येककलं तथा ॥ ४१ ॥

वर्धयति क्षीयतेऽसौ य एवं वेद न क्वचित् ।
अबिन्धनानामन्येषां दूरस्थत्वादिदं न हि ॥ ४२ ॥

येन दर्पणवत्स्वच्छा जायन्ते तेषु चांशवः ।
लाञ्छनं प्रतिबिम्बं गोर्गोमतीन्दाविनांशुभिः ॥ ४३ ॥

चन्द्रेण शौक्ल्यं वान्येषां तद्दर्शेऽप्यस्ति यत्ततः ।
बिम्बं सितासिते षड्भे व्यर्केन्दोरवि भावतः ॥ ४४ ॥

रवीन्दुमध्यक्रान्तिज्या विषुवत्कर्णसङ्गुणा ।
मध्याह्नाच्चन्द्रशङ्काप्ता उत्तरा वाग्विधौ रवेः ॥ ४५ ॥

ऋणं धनं चाक्षभायां भुजोऽर्कादिन्दुदिङ्मुखः ।
यस्याल्पा ज्या खमध्येन्दुच्छायाकर्णाहता तथा ॥ ४६ ॥

द्वादशघ्नाक्षजीवायाः कल्पनाया रविं विधुम् ।
खमध्याद्विषुवत्कक्षा मध्येतज्ज्या शिरस्यपि ॥ ४७ ॥

भुजाङ्गुलं लवं पातः कर्णो द्विदशकोटिजः ।
अर्कसंज्ञितदिङ्मध्याद्बाहुं शङ्कुं तथादिशम् ॥ ४८ ॥

---

40 *b*) Ba. समो दक्षिणतः S. An. दक्षेण यः
41 *c*) Ba. क्षीयमाणकला
42 *d*) All texts other than Ba read – स्थि –
44 *d*) Ba. व्यर्केन्दोरर्कं
45 *c*) S. मध्याह्नचन्द्र
46 *a*) $D_2$. $B_1$. $B_2$. भ्यां
48 *a*) Ba. भुजा अपि लयं यान्ति
*d*) M. $D_2$. S. $B_1$. $B_2$. यथा

प्राक्पश्चात्संमुखीं शुक्ले कृष्णे कोटिं प्रसार्य तत् ।
बाहुकोट्यग्रकं कर्णं कोटिकर्णयुतो विधोः ॥ ४९ ॥

बिम्बं तदूर्ध्वमानेन लिखेत्कोट्याश्रयेण च ।
प्राग्रेखे याम्यरेखे च तदन्तर्मत्स्यमध्यगे ॥ ५० ॥

कर्णेन तन्मुखं शुक्लं कृष्णं वा परभागतः ।
दत्वा तदग्रयाम्योदङ्मध्यमत्स्यद्वयस्य च ॥ ५१ ॥

मध्यसूत्रयुतेश्चापं विन्दुं त्रिस्पृग्लिखेदिह ।
कोटथा साधित याम्योदग्रेखान्ते शृङ्गमुन्नतम् ॥ ५२ ॥

अनेकगुणकच्छेदभवांशांश्छेदसंमितान् ।
द्वन्द्वशोनाशयेद्वापवर्तयेदिच्छयैव तु ॥ ५३ ॥

बाहुसिद्धो हि यश्छेदस्तदुत्पत्तौ हरा गुणाः ।
गुणगुण्यहरा व्यस्तं विक्षेप्या अन्यथा यदि ॥ ५४ ॥

तावत्स्वदेशलम्बज्या स्वज्यासार्धं यथार्थतः ।
तां त्रिज्यां कल्पयेच्छायां व्यवहारसुखप्रदाम् ॥ ५५ ॥

तथा क्रान्तिज्याधिका सत्यग्रज्येति प्रकीर्त्यते ।
क्रान्तिज्या विषुवत्कर्णहताग्रज्यापि भास्करैः ॥ ५६ ॥

सा चेत् त्रिज्येष्टभाकर्णस्तदा ग्राह्योऽङ्गुलादिका ।
क्रान्तिज्या चेष्टकर्णघ्ना लम्बज्याप्ताङ्गुलादिका ॥ ५७ ॥

स्वशङ्कुतुल्यक्रान्तिज्याग्राङ्गुलं विषुवच्छ्रवः ।
अर्धाङ्गुलफलं वारमध्येषु कर्णामितीरिते ॥ ५८ ॥

रेखा प्राक्पश्चिमाया सा सममण्डलमुच्यते ।
सा वृत्तमध्येऽत्यन्यत्वं मेरुश्चेदङ्गुलद्वयम् ॥ ५९ ॥

---

54 *b*) M. $D_2$. $B_1$. $B_2$. हरो
57 *b*) M. S. ह्यप्ताङ्गुलाधिका
58 *c*) Ba. वा *d*) Ba. कर्णोन्मितीतरौ



उद्भागस्था प्राच्यपरा या रेखा सममण्डलात् ।
उन्मण्डलं तयोर्मध्यं सर्वत्र विषुवत्प्रभा ॥ ६० ॥

विषुवन्मण्डलं चैषा छायाग्रे विषुवात्रहि ।
इष्टच्छायाग्रविषुवन्मध्यमग्राधर्गं मुने ॥ ६१ ॥

सा रेखोन्मण्डलाद्भाग्रे सदैत्यग्रात्प्रतिष्ठिता ।
उन्मड(? ण्ड)लादुदक्छाया याम्यक्रान्तावुवागुदन् ॥ ६२ ॥

भुज इत्युच्यते मध्यं सममण्डलभाग्रयोः ।
अतो माध्याह्निकी छाया मित्यं माध्याह्निको भुजः ॥ ६३ ॥

यदा दिनार्धोदक् क्रान्तिः स्वर्क्षच्छाया तदा न हि ।
रवेः शङ्कग्रसंस्थत्वाद्भा यास्तत्प्रतिदृश्यते ॥ ६४ ॥

यदोदक्क्रान्तिरक्षोना तदोदगुदितो ग्रहः ।
उदगस्तं यथावृद्धिः सममण्डलमेति च ॥ ६५ ॥

क्रान्तिज्या विषुवच्छाया यदि स्याद्विषुवच्छ्रवः ।
सममण्डलशङ्कुः स्याच्छायाकर्णौ तु पूर्ववत् ॥ ६६ ॥

अक्षभा द्वादशाभ्यस्ता लम्बाक्षज्या विभाजिता ।
सममण्डलगे सूर्ये कर्णौ क्रान्तिज्यया सकृत् ॥ ६७ ॥

इच्छाकर्णोऽक्षभाघातादग्रया वा श्रवः स तु ।
सममण्डलशङ्कुर्वा त्रिज्या तेनार्कताडिता ॥ ६८ ॥

---

62 *d*) $D_2$. S. $B_1$. $B_2$. –वा च्युदक्
63 *d*) Ba. –की द्विज
64 *b*) Ba. S. स्वाक्षच्छाया
67 *a*) M. $D_2$. S. $B_1$. $B_2$. –स्ते
*b*) All mss. except Ba. give ज्ये; ते
68 *a, b*) Ba. छायाकर्णावक्षभायां तदाग्रावधजः स तु ।

शङ्कुर्याम्योत्तरा त्रिज्या कल्प्यार्थं तत्कृतेस्तथा ।
दिक्कोटिमध्यज्यावर्गं तन्मध्यं सार्धभं यतः ॥ ६९ ॥

पूर्वापरां कोटिकृतिं तदेव मनुतान्मुने ।
दोर्ज्याक्षभा कोटिकृत्योः कल्प्या त्रिज्याकृतिर्युतिः ॥ ७० ॥

अर्कच्छायार्कवज्ज्ञेया यदा तावत्तदाऽग्रजा ।
फलमित्युच्यते तावत्तद् व्यक्षक्षितिजान्तरम् ॥ ७१ ॥

त्रिज्यावर्गार्धमध्यार्धराशिज्यावर्गमेव तु ।
अग्रज्यावर्गहीनं तत्कोणार्कोदयमध्यगम् ॥ ७२ ॥

तत्कल्पत्रिभजावर्गं यदि शङ्कुकृतिर्भवेत् ।
कोटिज्याकृतिरेनां हि करणीत्याहुरागमाः ॥ ७३ ॥

फलवर्गो बाहुवर्गः कर्णः शङ्कुद्वयोद्भवः ।
स कोणस्थग्रहो व्यक्षक्षितिजान्तर एव हि ॥ ७४ ॥

सद्दक्फलः स्वस्वशङ्कुः स्वस्वार्धफलवर्जितः ।
ऊर्ध्वाधःस्थं स्वकं व्यक्षं क्षितिजाद्यद्वागुदक् ॥ ७५ ॥

याम्याया विदिशोः शङ्कुः स शङ्कोर्दक्षिणो रवौ ।
मध्यच्छायातो भुजज्या सौम्यातो दक्षिणोत्तरा[1] ॥ ७६ ॥

याम्यतोऽक्षक्रान्तिरस्या अक्षज्या लम्बजा यदि1 ।
चरत्युत्तरयोः सौम्ये प्राग्वत्कोणाक्षभाश्रुतिः ॥ ७७ ॥

---

69 *c*) Ba. दोः कोटि; M. $D_2$. $B_1$. $B_2$. An. –वर्ज्यं
72 *b*) Ba. –रात्रि–
74 *a*) Ba. Be. $D_1$. An. पल–
75 *b*) M. $B_1$. अवाक्फलविवर्जितः
76 1) This is the first line of 77 according to all other texts except Ba.
77 1) This is the second line of 76 according to all texts except Ba.



द्वादशाक्षप्रभा क्रान्तिश्चेत्रं मेषादिको रविः ।
कर्क्यादौ प्रोज्झ्य चक्रार्धात्तुलादौ भार्धसंयुतः[1] ॥ ७८ ॥

मृगादौ प्रोज्झ्य भगणात्बाहुर्गम्याद्वियुक्पदे[1] ।
चलसंस्कृतसूर्योनच्छायार्के भाजिते क्रमात् ॥ ७९ ॥

प्राक्पश्चान्मध्यरेखातो देशः स्वीयस्तदन्तरम् ।
देशान्तरफलं भानोर्युक्त्यान्यत्सकलं मुने ॥ ८० ॥

छायार्कार्कान्तरांशाः स्युश्चलाः स्वस्वमिनादिके ।
छायार्केत्वृणमूने प्राक्पश्चाच्चक्रं च लम्बते ॥ ८१ ॥

कोणच्छायाकृतिदलात्पदं वा त्रिज्यया हृतम् ।
कोणात्कर्णहृतं क्रान्ति ज्यातश्छायारविस्ततः ॥ ८२ ॥

क्रान्तिज्येष्टाग्राङ्गुलाद्वा भाकर्णाभ्यां समाध्वनि ।
भुजाङ्गुलं भुजच्छाया कर्णः कोटिस्तलाभिधः ॥ ८३ ॥

शङ्कुपूर्वापरा रेखा तथान्या मध्यमत्स्यजा ।
अद्भिः समीकृते स्थाने कल्प्यमा द्वादशाङ्गुलम् ॥ ८४ ॥

व्यासार्धाङ्गुलमुत्सेधः षडंशव्यासमेव वा ।
छायामध्यशलाकाभ्यां छायाग्रज्ञानदुर्बलः[1] ॥ ८५ ॥

मध्ये तून्नतशिखरं नखाद्रि व्यङ्गुलोचितम् ।
स्वाङ्गुलेनैव सर्वत्राङ्गुलज्ञानकारणम् ॥ ८६ ॥

---

78 *b*) Ba. –गो 1) Compare सू. सि. III 19
79 *b*) Compare सू. सि. III 19
85 1) All texts except Ba. have the following line after this ;—
सूच्यग्रस्थूलशङ्कुर्वा चतुःशृङ्गिणमेव वा ।
86 *b*) S. –लां)–

सूच्यग्रेणेष्टवृत्तस्य प्रोतेनाङ्कितमध्यगाम् ।
स्थापयेत्प्रान्ततच्छायां शङ्कोर्यत्तदमध्यतः ॥ ८७ ॥

छायाग्रं यत्र भूवृत्ते पूर्वाह्णे प्रत्यगेव तत् ।
मध्यात्तथापराह्णेऽर्के दिशि शङ्कुं निधाय च ॥ ८८ ॥

प्राचीं निर्दिश्य भाग्रेण व्यस्तं बाहुं प्रभाग्रतः ।
कोटिं यथार्हं संप्रसार्य दोःकोटयोर्योगयुग्मगाम् ॥ ८९ ॥

रेखां प्राच्यपरां कुर्याद्भुजाज्ञाने फलं यदि ।
ततस्तयोर्याम्यगेऽर्के वर्धते बाहुरुत्तरः ॥ ९० ॥

प्राचीशान्या जायतेऽर्के ततस्तत उदग्गते ।
ततस्ततो दक्षिणगो भुजा प्राच्यग्निदिग्गता ॥ ९१ ॥

अग्रान्तरं तत्प्राग्बिन्दोर्यन्मुखोऽर्कस्तदाचरेत् ।
तद्दिङ्मुखं प्रसार्य प्राग्बिन्दुशुद्धं हि निक्षिपेत् ॥ ९२ ॥

तत्र पूर्वापरा रेखा तन्मध्याद्दक्षिणोत्तरा ।
सममण्डलमेतत्स्यान्मत्स्येन मुनिसत्तम ॥ ९३ ॥

द्वित्र्यङ्गुलादिको मध्यच्छायावृत्तदलं यदि ।
अग्राज्ञानेन चैवं स्याच्छङ्कुश्चेदुन्नतं किल ॥ ९४ ॥

कालस्तु पञ्चनाड्यस्तन्मध्यमस्तत्वलिप्तिकाः ।
नाभ्येति क्रान्तिरेकाहे मध्या स्याद्भाःकलापि वा ॥ ९५ ॥

87 *a*) M. $D_2$. S. $B_1$. $B_2$. –वृत्त–
*b*) M. $D_1$. $D_2$. S. $B_1$. $B_2$. An. प्रान्ते–
*c*) Be. $D_1$. प्राग्रतश्छाया
*d*) M. $D_2$. $B_1$. $B_2$. An. –मध्यमः
88 *c*) M. $D_2$. S. $B_1$. $B_2$. र्के *d*) Ba. पिधाय
90 *b*) $D_1$. $B_2$. An. कलं
91 *a*) Ba. –ति वै *c, d*) Ba. –प्र प्र भा *d*) Ba. –प्र
95 *a*) Ba. पञ्चोना *b*) Ba. मध्य
*d*) Ba. मध्याद्भा कलयापि वा



अतोऽग्राङ्गुलमेकं वा द्व्यङ्गुलं न हि सिध्यति ।
दिशश्च सुस्फुटा एव भवन्ति मुनिसत्तम ॥ ९६ ॥

चतुरस्रं यावदिष्टं तत्कर्णार्धशलाकया[1] ।
कोणं वापिशलाकाभ्यां तावतीभ्यां दिगन्ततः ॥ ९७ ॥

यदा विस्तरसूत्राग्रदिशोर्मध्यं विदिश्यपि ।
निक्षिप्य चतुरस्रं तु वंशे तु स्थापनादिषु ॥ ९८ ॥

सत्युन्नतेऽर्धनाड्यूने दुर्दशा स्यात्प्रभामुने ।
दुर्दशायां यथा छाया विन्यस्तस्य यथादिशम् ॥ ९९ ॥

चापमृक्षत्रयस्याग्रे छायामार्गे मुनीश्वर ।
ज्यासङ्ख्या चेच्चतुर्विंशत्या(?त्य)धिका नतसम्भवा ॥ १०० ॥

तदाधिक्यक्रमज्या त्रिज्यान्विता हि नतोत्क्रमा ।
चरक्रमज्या सत्रिज्या भवेदन्त्या ततः सुत ॥ १०१ ॥

त्रिज्याधिकक्रमधनुः सत्रिभासुतया धनुः ।
अन्यत्र तूत्क्रमज्याभिराधिक्याद्धुभयं तथा ॥ १०२ ॥

शङ्कोस्त्रिज्यांशाङ्गुलैस्तु वृत्ते क्रान्त्या यथोदितम् ।
उदयास्तमनस्थानं मध्यं ज्ञात्वा नतांशकैः ॥ १०३ ॥

96 *b*) Ba. Be. द्व्यङ्गुलं *c*) Ba. देशा–
97 1) Additional lines in S. after this are :—
मध्यबिन्दोः परिच्छेद्यं विदिग्रेखा करोति तत् ।
परिच्छिद्य दिशोवेष्ट विस्तरार्धशलाकया ॥
98 *a*) Ba. S. यद्वा *c*) M. $D_2$. $B_1$. $B_2$. चतुरस्रे
*d*) M. $D_2$. $B_1$. $B_2$. करोतु
99 *c*) M. $D_2$. $B_1$. $B_2$. दुर्दशनाया छायायां
102 *b*) Ba. एवमुक्तं समासतः; also तत् त्रिभेण युतं धनुः as पाठभेद
*d*) M. $D_2$. $B_1$. $B_2$. –क्ये शो–
103 *b*) S. कार्या यथादिशम्

तच्चापदिननाडयंशैर्दिङ्मध्ये न प्रभापदम् ।
विभज्य वा कालबोधः काष्ठाखण्डं प्रकल्प्य वा ॥ १०४ ॥

निधायशृङ्गे प्राकपश्चाच्छङ्कोर्मध्याह्नभागगे ।
कोटिज्यांशाङ्गुलोत्सेधं मध्यं शङ्कोरुपर्यपि ॥ १०५ ॥

ब्रह्माण्डमध्यं सूत्र्यग्रं शङ्क्वग्रं नाडिकांशतः ।
शङ्काग्राच्च प्रभामार्गस्पृक्सूत्रैः कालसाधनम् ॥ १०६ ॥

गोलार्धमध्ये व्यासार्धयष्ट्या वा कालवेदनम् ।
क्रान्त्या मध्यनतेन प्रत्यग्रमत्राङ्कनं सुखम् ॥ १०७ ॥

धनुर्वेद्यं विधिं कलषं नतदिश्यपमस्तकम् ।
धारारन्ध्रेण मध्ये प्राप्तातपेन च मध्यतः ॥ १०८ ॥

लम्बसूत्रेण चक्रस्य क्रमाङ्कैर्ज्ञायते क्वचित् ।
समाङ्कैः कालविज्ञानं मासं प्रत्यनुपाततः[1] ॥ १०९ ॥

चेष्टावान्प्रतिनाडीनां पक्ष्मनिश्वासतो यदि[1] ।
कुब्जो मयूरो वा स्यातां किं ततः शाल्मतोद्भवैः[2] ॥ ११० ॥

नरं कपिं मयूरं वा स्थूलवेणूदरं मुने ।
कर्णदघ्नं पूर्णजलं पृष्ठच्छिद्रं प्रकल्पयेत् ॥ १११ ॥

न्यस्त्वा तोये प्लवत्काष्ठं तं बद्ध्वा वदनाद्बहिः ।
तावत्येवाङ्कनं कालश्चित्रेणानेन गम्यते ॥ ११२ ॥

---

104 *c*) $D_1$. An. त्रिभज्यया *d*) Ba. काल-

107 *b*) Ba. षष्ट्या

108 *a*) Ba. विधिः कल्पो *b*) Ba. -श्यु-
*c*) Ba. धरारन्ध्रे मध्यमानं *d*) Ba. प्रोतयेच्च

109 1) Missing in M. $D_2$. $B_1$. $B_2$.

110 *a*) Ba. चेष्टानु-; An चेष्टान्वा
1, 2) missing in M. $D_2$. $B_1$. $B_2$.



गोपयेज्जलनिः स्रावं मध्येऽक्षं नमनं तथा ।
लम्बसूत्रं पृच्छमानं षष्ट्यङ्कं च समान्तरम्[1] ॥ ११३ ॥

रक्ततन्त्वा दिना यावन्नाडीषष्ट्यन्तरेति तत् ।
ततो रन्ध्रेण पृष्टास्तान् पूरयेच्चोपकज्जलैः ॥ ११४ ॥

अमलेऽम्भसि वा कुण्डे पलानां दशभिः कृतम् ।
ताम्रपात्रमधच्छिद्रं चतुरङ्गुलमुच्यते ॥ ११५ ॥

हेममाषचतुष्केण ग्राह्यात्राननविस्तृतौ ।
दशाङ्गुलकमुत्सेधे षष्टिर्मज्जत्यहर्निशम् ॥ ११६ ॥

तत्पात्रं यादृगपि वा यद्येवं तच्च गृह्यताम् ।
कपालयन्त्रेणानेन कालो ज्ञेयः स्फुटेन वा ॥ ११७ ॥

देवदारुः शिवतरुः खदिरो रक्तचन्दनः ।
शङ्कर्थं वंशनिम्बाद्या ग्राह्या यज्ञीयभूरुहाः ॥ ११८ ॥

एवं हस्तोच्छ्रितः शङ्कुरधोहस्तनिरवातगः ।
उत्सेधश्चक्षुषा कल्प्यो द्वादशाङ्गुलवानिति ॥ ११९ ॥

पश्येद्यत्र स्थितो योऽयं तदग्रे दर्पणे मुखम् ।
दिवा निरूप्यौ भाकर्णौ निरूप्यौ चक्षुषः सुखम् ॥ १२० ॥

तादृक् शङ्कुद्वयं ग्राह्यं यथा दिग्भ्रमणस्थितम् ।
ग्राह्यान्तरक्षेपमध्यमागमानां विवेचने ॥ १२१ ॥

---

113 *b*) M. $D_2$. $B_1$. $B_2$. छिन्न-
1) This and next line come before last two in all texts except Ba.

114 *c*) Ba. Be. $D_1$. निरन्ध्रे; Ba. ह्यष्टास्तान्

इति ते कथितं विप्र तथान्यत्तत्त्वतः शृणु[1] ।

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने
ब्रह्मसिद्धान्ते चतुर्थोऽध्यायः ॥

1 ) This line occurs only in Ba.

## पञ्चमोऽध्यायः ।

समागमो वा युद्धं वा भौमादीनां परस्परम् ।
नो भावीति मुनिश्रेष्ठ चन्द्रेणैव समागमः ॥ १ ॥

समलिप्तौ यदा स्यातां दृक्कर्माणौ मुहुः समौ ।
तदा तदन्तरक्षेपे मानैक्यार्धसमे सति ॥ २ ॥

अन्योन्यस्पर्शमानत्वादुल्लेखं युद्धमेव तत् ।
हीने भेदं समुच्येत चापसव्यं तथाधिके ॥ ३ ॥

आरादंशार्धमंशूनां व्याप्तिर्हि तु शशीनयोः ।
आब्रह्माडं कपालं तत्स्तृत्यंशे तद्ग्रहान्तरे ॥ ४ ॥

रश्मिसम्मीलनादंशुविरुद्धमधिकांशुकात् ।
समागमश्चेत्प्रभवति ताराबिम्बसमागमः ॥ ५ ॥

त्रिज्यांशाङ्गुलयष्ट्यग्रे तिर्यङ्मध्यांशकाङ्गुलम् ।
शलाकां स्थापयेन्मध्ये दण्डमूलं च पश्यता[1] ॥ ६ ॥

अभेदयोगे दृश्येते द्वौ शलाकाग्रयोः खगौ[1] ।
मनःपूर्त्यै ग्रहाणां चाप्येवं योगं प्रसाधयेत्[2] ॥ ७ ॥

वृषेऽत्यष्ट्यंशके यस्य याम्यः क्षेपोंऽशकद्वयात्[1] ।
भवेदभ्यधिको भिन्द्याद्रोहिण्याः शकटं हि सः ॥ ८ ॥

3 *c*) Ba. भेदः
4 *d*) Ba. तत्स्वभ्यंशे
5 *b*) Ba. - विरुद्धो यद्विमांशुमान्
6 *d*) Be. $D_1$. An. दण्डं सूक्ष्मं 1) Missing in S.
7 1, 2) Missing in S.
8 1) Missing in S.

नाणुरेकोऽपसव्ये चेन्नापसव्यं तदिष्यते ।
तथा समागमेऽणुश्चेदेकोऽसावसमागमः ॥ ९ ॥

अस्थूलावनणू द्वौ चेदुदक्स्थो दक्षिणाश्रितः ।
स्थूलाणु प्रथमप्रश्नेऽपीत्येवार्धत्रयं स्मृतम् ॥ १० ॥

साम्येऽपीत्यपिशब्देन सौम्येऽपीति हि कीर्तितम् ।
तदुद्दिष्टाविमौ शब्दावुदक्स्थो दक्षिणाश्रितः ॥ ११ ॥

अदीप्तिमान्विवर्णश्च वेपथू रूक्षदर्शनः ।
दुर्बलश्चापि योऽणुः स स्थूलस्तु स्वयमन्यथा ॥ १२ ॥

जयी जितश्च स्थूलोऽणुर्यद्वद्दृष्टान्तवाचकौ ।
इमौ शब्दौ वृथा स्यातामुदक्थो दक्षिणाश्रितः ॥ १३ ॥

ताविमावेव याम्यादि स्थूलाख्यत्वं वृथोदितम् ।
याम्येऽपि युक्त एवोक्तस्थानादि बलमत्र चेत् ॥ १४ ॥

अन्यत्र नैतदित्याज्ञावैकृतात्तत्सदीरितम् ।
स्थानादि बलाभिन्नात्र व्यर्था नैकापि भा स्मृता ॥ १५ ॥

प्रश्नत्रयेऽप्येवान्यस्मिन् स्थितौ सूक्ष्मफलं स्मृतम् ।
समागमेऽपि सव्ये वा स्वल्पौ द्वावपि वेपथू ॥ १६ ॥

स्वोत्कटौ विग्रहौ द्वावादीप्तौ यदि समागमौ ।
उदक्स्थो दक्षिणस्थो वा भार्गवः प्रायशो जयी[1] ॥ १७ ॥

---

10 *b*) S. सर्वदा जयी After this first line S. has the lines :—
यांम्याश्रितस्तु विजितस्थूलाणू तद्वदेव हि ।
बिम्बसाम्ये यदा तद्वदुक्स्थो दक्षिणाश्रितः ॥

11 *a*) M. $D_2$. S. $B_1$. $B_2$. An. याम्ये *b*) M. $D_2$. $B_1$. $B_2$. सास्ये
*c*) M. $D_2$. $B_1$. $B_2$. तद्दुष्टा

13 *a*) Ba. $D_1$. न पीडितश्च

14 *a*) S. मुख्याविमावेव यदि *b*) S. स्थूलाण्डत्वं

15 *d*) M. $D_2$. S. $B_1$. $B_2$. केनापि

17 1) Compare सू. सि. VII 23



जगतः कल्पनैवेयं भावाभावाय केवलम् ।
अन्योन्यमतिदूरस्थाः कथं युद्धं प्रकुर्वते ॥ १८ ॥

छादकोऽधः स्थितश्छाद्य उपरिस्थः शशी रवेः ।
छादकश्छादिका राज्ञो भूच्छाया मुनिसत्तम ॥ १९ ॥

यद्येवं प्रतिशुक्लान्तं स्याद्दर्शं प्रत्युपप्लवः ।
सम्भवाद्रवि तुल्येन्दोर्भूच्छाया तुल्यशीतगोः ॥ २० ॥

छादकौ राहुकेतू स्तामन्योन्यस्यार्धचक्रगौ ।
एवं यद्युक्तदोषोऽपि नेति चेत्तद्ब्रुवे मुने ॥ २१ ॥

तथा चेच्छुक्लकृष्णान्तादुपरागास्तथान्यदा ।
न चेद् द्विरिन्दोर्मासं प्रत्यर्कस्य प्रतिवत्सरम् ॥ २२ ॥

यद्येक एव राहुः स्यान्न ग्राह्यस्तस्य भार्धगः ।
एकैकं ग्रहणं मासं प्रतिवर्षं प्रतीति च ॥ २३ ॥

शश्येण वटवल्मीकलक्ष्येऽङ्के बालिशः फणी ।
तद्वल्मीकस्थितोत्तीति कल्प्यो नार्कग्रहोऽस्ति चेत् ॥ २४ ॥

किं न स्याद्ग्रहणं शश्वत्कुतस्तत्र समं सदा ।
ग्रहणान्तरकालानां वैषम्ये किं नु कारणम् ॥ २५ ॥

बहुप्रलापास्तन्नोक्तास्तस्माद्वेदविरोधिनः ।
निमित्तकारणं राहुर्द्वयोरेवोपरागयोः ॥ २६ ॥

विक्षिप्तः फणिना चन्द्रः सूर्यमाच्छादयेदिव ।
मेघः स्वयं वा भूच्छायां प्रविशेद् ग्रहणं भवेत् ॥ २७ ॥

---

21 *d*) Ba. ब्रुहन्

22 *c*) M. $D_2$. $B_1$. $B_2$. न न

24 *c*) Ba. -नास्ति

26 *a*) Ba. Be. $D_1$. An. -स्ते नोक्ता

शीघ्रगामी शशी सूर्यं छाया पश्चिमतोऽपि वा ।
प्रागेत्यतीत्य तत्पश्चाद्ग्रहणं भास्करस्य हि ॥ २८ ॥

प्राङ्मोक्षः शीतगोस्तु प्राग्ग्रहणं प्रत्यगेव हि ।
ब्रह्मेन्दुशक्रवित्तेशवरुणाग्नियमाः क्रमात् ॥ २९ ॥

फणी नभगणैक्यघ्नद्विमितग्रहणाधिपाः ।
समलिप्तौ यदा छाद्यच्छादकौ तत्र चेद्भुजः ॥ ३० ॥

विक्षेपजनको राश्यर्धोनः सोमग्रहस्तथा ।
अर्कग्रहोऽप्याशङ्क्येत वृत्त्यंशाग्राधिकः स तु ॥ ३१ ॥

सर्वत्र सोमग्रहणं सममेव हि दृश्यते ।
उभयोरन्तराभावाद् भूच्छायेन्दोश्च सर्वदा ॥ ३२ ॥

ग्रहान्तरं शशिक्षेपस्तेनोद्देश्य उपप्लवः ।
पूर्वापरान्तराभावादभावो लम्बनस्य च ॥ ३३ ॥

पर्वप्रतिपदोरेव ग्रासमोक्षौ विधोर्मुने ।
न हि लम्बनहेतुः स्यादेव याम्योत्तरान्तरम्[1] ॥ ३४ ॥

तस्मिन्सति त्रिपादस्थेऽप्युपरागोऽस्ति तद्दिने ।
तावत्कः पुत्र याम्योदग्गत्या गत्वा प्रसिध्यति ॥ ३५ ॥

तदन्तरेणावनतेः सम्भवाद्भास्करग्रहे ।
सेन्दुक्षेपयुतोना दिक्तुल्यभेदे ग्रहान्तरम् ॥ ३६ ॥

---

29 *a, b*) An. – स्तमात्तस्य प्राग्ग्रहणं न हि
*c*) Ba. Be. $D_1$. विघ्नेश
30 *a, b*) Ba. – क्याद्धि निमित्त –
34 1) Additional lines in S. after this are :—

अतो न लम्बनस्यास्ति मध्याह्ने सम्भवः किल ।
स्याल्लम्बनद्वयं हेतुर्यदि याम्योत्तरान्तरम् ॥

35 *a*) Ba. An. – स्थो *b*) Ba. Be. $D_1$. तावत्काळस्तु
M. $D_2$. $B_2$. तावत्कः कुत्र



साभाश्चोदक्कुमध्यलग्नक्रान्त्योः साम्येन सम्भवः ।
पूर्वापरान्तराभावान्मध्याह्ने मास्तु लम्बनम् ॥ ३७ ॥

अस्त्यन्यदा तु पूर्वाह्ने ग्रासमोक्षौ तु दर्शगौ ।
प्रतिपद्यपराह्ने तु तथा स्तो वा तदा क्वचित् ॥ ३८ ॥

अर्केन्द्वोरतिदूरत्वात्समीपत्वादिदं भवेत् ।
दृक्कर्मणैव तत्सिद्धेर्भग्रहग्रहसङ्गतौ ॥ ३९ ॥

लम्बनावनती न स्तामपि सत्यन्तरद्वये ।
इष्टलम्बनमन्यत्र यदीष्टेऽवनतिर्भवेत् ॥ ४० ॥

दृक्कर्म च तथा विप्र प्रत्यक्षं च न तत्तथा ।
दृक्कर्मणी द्वे च कृते व्यर्के भासति तादृशे ॥ ४१ ॥

वृथाश्चावनतेर्भावोऽखण्डत्वाच्च तथा तथा ।
मध्यज्या मध्यलग्नस्य नतज्या हृद्लेऽर्कवत् ॥ ४२ ॥

चरसंस्कृतलग्नज्या लम्बज्या चेद्भवत्यपि ।
अन्त्यक्रमज्योदयज्या त्रिज्या चेन्मध्यमौर्विका ॥ ४३ ॥

कोटिजीवोदयज्या स्यादित्यूह्यं कोटिजास्फुटम् ।
मध्यज्या कर्णजा दोर्ज्या दृक्क्षेपो दक्षिणोत्तरः ॥ ४४ ॥

अस्य दिङ्मध्यजीवानि कुज्या विक्षेपवर्गयोः ।
विक्षेपो दृग्गतिर्मूलं शङ्कुरित्यपि चोच्यते ॥ ४५ ॥

नतांशस्फुटदोः कोटिजीवे दृक्क्षेपदृग्गती: ।
छेदः शङ्कुहृतैः कुज्याकृतिश्छेदसमा यदि ॥ ४६ ॥

---

37 *a*) Ba. Be. $D_1$. -क्षा Ba. Be. $D_1$. An. – लग्ने
39 *d*) Ba. Be. $D_1$. An. मध्यग्रहणसङ्गतौ
41 *b*) Ba. ततस्तथा *d*) All texts except Ba. give तादृशी.
45 *a, b*) Ba. अन्यस्य दिङ्मध्यजीवा द्युज्या
46 *d*) Ba. – हृति –

मध्यलग्नार्कोत्थ दोर्ज्या कोटिलम्बननाडिकाः।
महत्त्वात्प्राग्गतेरिन्दोर्देशान्तात्प्राक्समोऽशुना ॥ ४७ ॥

प्राक्कपालेऽन्यथा पश्चात्तथास्याद्युक्तिरप्यतः।
लम्बनं पर्वतः शोध्यं प्राक्कपालेऽन्यथा परे ॥ ४८ ॥

आसकृल्लम्बनं यावद्भिः सिद्धं सकलं समम्।
रवीन्द्वोर्लम्बनं चेति हरिजं चेति भास्करः ॥ ४९ ॥

वारयामास शब्दाभ्यामन्ययोगेषु लम्बनम्।
अग्रस्तोऽर्को विमुक्तो वा दिवा नक्तं च कालयोः ॥ ५० ॥

त्र्यक्षे क्षणत्रयं दृश्यः पापिभिः सत्तमा इव।
स्थिरीकृतं तद्धरिजं लम्बनं स्वाष्टमान्वितम् ॥ ५१ ॥

पितृभुक्तिविहीनानामेवं वा सर्वलम्बनम्।
स्थिरीकृता दृग्गतिज्या सप्ताष्टाङ्कहतापि वा ॥ ५२ ॥

अल्पच्छेदाथवा छेद स्वाष्टमेन स्थिरीकृता।
यद्वोदयज्याप्रभवो विना बाहुज्यया मुने ॥ ५३ ॥

मेषलग्नान्तरक्षेत्रज्यातो वात्र्येकतः परम्।
वर्गयोरुक्तदृक्क्षेप एष मार्गः सदा न सत् ॥ ५४ ॥

क्वचित्सन्नपि तत्रैतन्न क्वचिद्वापि सन्किल।
दृक्क्षेपत्रिभजा चेत्स्यान्मध्यभुक्त्यन्तरस्य यः ॥ ५५ ॥

अर्कविध्वोः पञ्चदशो नतिर्वा त्रिकृतिर्मुने।
दृक्क्षेपसप्तत्यंशो वा वनतिर्ग्रहणं ततः ॥ ५६ ॥

---

49 *b*) $D_1$. An. – द्विरुद्धं

52 *a*) M. $D_2$. S. $B_1$. $B_2$. An. –भक्ति

54 *c*) M. $D_2$. S. $B_1$. $B_2$. –त–

55 *b*) Ba. च



नतिरल्पान्तरा वान्यमार्गाभ्यां न हि दोषदा।
दृश्यते द्वादशांशोऽपि स्वच्छत्वाद्ग्रह एव हि ॥ ५७ ॥

इन्दोर्लिप्तात्रयं वार्कस्योष्णत्वाद् ग्रस्तमत्र न।
ग्रहणं नामभेदो हि दुर्लेख्यमपि पुण्यदम् ॥ ५८ ॥

तेनान्तराल्पकग्रासो ग्राह्यं चेन्न समो यदि।
सर्वग्रासोऽपि तिग्मांशोः क्वचिद्देशान्तरे तु सः ॥ ५९ ॥

अर्केन्द्वन्तरसद्भावात्स्पर्शमात्रोऽपि नास्ति हि।
पर्वाधिपतिसङ्ख्यासु पातालग्रहणं च तत् ॥ ६० ॥

स्नानादिषु तु न ग्राह्यं शुभेषु ग्रहयुद्धवत्।
ग्रहणं ग्रहयुद्धं वा तत्तदह्नि फलप्रदम् ॥ ६१ ॥

छन्नं ग्राह्याधिकं चेत्स्थाद्विमर्दग्रहणं च तत्।
यावद्बिम्बैकदेशो वा तावदेव न दृश्यते ॥ ६२ ॥

विमर्दग्रहणं तावत्कालो वैमर्दिकः स्मृतः।
चन्द्रबिम्बाधिकं सूर्यबिम्बमध्ये न कर्बुरम् ॥ ६३ ॥

तत्रारात् कङ्कणाकारं कङ्कणग्रहणं मुने।
तत्र कङ्कणकालः स्यादसौ वैमर्दिकस्तु यः ॥ ६४ ॥

स्थितिकालो भवेत्तावद्यावत्तिष्ठत्युपप्लवः।
कर्णमानैक्यमानान्तरार्धे क्षेपो भुजः स्वकः ॥ ६५ ॥

आभ्यां पूर्वपराकोटिर्गत्यन्तरसमा यदि।
स्थित्यर्धं च विमर्दार्धे क्रमात्स्यादष्टनाडिकाः ॥ ६६ ॥

---

57 *d*) Ba. स स्वच्छा –

58 *b*) Ba. नतिरत्र न

59 *a*) S. नेतरत्सकलग्रासो

64 *a*) Ba. तत्रैतत्

66 *a*) Ba. अन्या

कङ्कणार्धे विमर्दार्धं कङ्कणग्रहणे भवेत् ।
ग्रासो मोक्षो विमर्दार्धे नोनयुक्तः सदैव सः ॥ ६७ ॥

निमीलनोन्मीलनाख्यं कङ्कणार्धेन तत्तथा ।
मुहुर्मुहुः कृताः सर्वे स्फुटाः सन्तु तदा मुने ॥ ६८ ॥

असकृल्लम्बनं सूर्यग्रहणेऽन्यत्सकृत्तथा ।
मध्यस्पर्शादन्तरं वा स्थित्यर्धादि स्फुटं स्वकम् ॥ ६९ ॥

स्थित्यादौ तु धनं वा स्यात्स्वमध्यहरिजान्तरम् ।
मध्याधिकोने क्षितिजखमध्यदिशि लम्बने ॥ ७० ॥

स्थित्यर्धादावृणं तच्चेदन्यथा हरिजान्तरम् ।
धनं कपालभेदे तु लम्बनैक्यं भवेन्मुने ॥ ७१ ॥

इत्थं स्फुटं वा स्थित्यर्धं विमर्दार्धं च नारद ।
स्थित्यर्धं लम्बनं चापि युगपच्चासकृत्स्फुटम् ॥ ७२ ॥

अह्नोगत्यन्तरं कोटिः कुमध्येऽष्टममक्षजम् ।
तदर्कग्रहणे मध्यस्थित्यर्धघ्नं स्फुटं मुने ॥ ७३ ॥

स्फुटस्थित्यर्धसम्भक्तं क्षेपो बाहुः श्रवस्ततः ।
ग्रासं तात्कालिकं प्रोज्झ्य मानैक्यार्धात्ततोऽन्यथा ॥ ७४ ॥

इष्टग्रहणकालः स्यादग्रासे स्पर्शमोक्षयोः ।
कालः स्फुटो ग्राह्यग्रास उन्मीलननिमीलने ॥ ७५ ॥

अतीर्थेऽक्षविधिः कल्प्यो मध्याह्ननतमूर्धगः ।
याम्योत्तरं मुनिश्रेष्ठ लम्बनं तद्ग्रहान्तरम् ॥ ७६ ॥

67 *d*) S. तथैव
70 *b*) Ba. Be. $D_1$. –स्वमध्य
73 *b*) S. एतन्मध्येऽष्टमध्यजम्
*c*) Be. M. $D_1$. $D_2$. $B_1$. $B_2$. An. मध्ये
*d*) M. $D_2$. $B_1$. $B_2$. –घ्ने
76 *a*) S. अतिर्यक्परिधि कल्प्य *b*) S. वलनं



नतोत्क्रमज्या क्षज्याघ्नी त्रिज्याप्ता क्रमकार्मुकम् ।
वलनं तद्ध्रुवं प्रत्यक्कपाले दक्षिणं हि तत् ॥ ७७ ॥

उत्तराभिमुखो याति तस्मिन्प्रतिपदं ग्रहः ।
प्राचीमध्यनतस्थानं याम्यप्रत्युद्गमादिति[1] ॥ ७८ ॥

उत्तरं वलनं प्राक्स्याद्वेलावलनमेव तत् ।
ग्राह्य क्रान्ति चतुर्विंशं मध्यं वलनमापनम् ॥ ७९ ॥

यद्वेलावलनं प्राच्या उत्तरोत्तरतो ग्रहः ।
उदेति मकरादौ तत्प्राक्पश्चात्स्वर्णमत्र तत् ॥ ८० ॥

अन्यदोदेति कर्क्यादावन्यदा यत्र तत्र तत् ।
इति निष्पन्नवलनं पारमार्थिकमुच्यते ॥ ८१ ॥

तत्क्रमज्या त्रिभज्या चेद्ग्रोऽधयो वलनाङ्गुलम् ।
सप्तत्या साङ्गुलं वा स्यादत्यल्पं यत्तदन्तरम् ॥ ८२ ॥

नान्यजोत्क्रमजाकार्यं न तासोः सत्रिभग्रहात् ।
वेदाः सम्प्रवदन्ते च नतकालाय चापतः ॥ ८३ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
पञ्चमोऽध्यायः ॥ ५ ॥

77 *a*) Ba. द्युज्याघ्नी *d*) $D_1$. लम्बनं
78 1) Additional lines in S. after this are :—
आमध्याह्नप्राक्कपाले दक्षिणाभिमुखो व्रजेत् ।
ग्रहप्रतिपदं तद्धि सौम्य प्राद्युद्भवा दिति ॥
79 *a, b*) Ba. प्राच्यां वेला–
*c*) Ba. ग्राह्यं; Ba. $D_1$. $B_2$. An. चतुर्विंश
*d*) M. $D_2$. $B_1$. $B_2$. चलनसाधनम्
83 *d*) Ba. –कालापवादतः

# षष्ठोऽध्यायः ।

छेदकेन विना छेदाः सुस्फुटा उपरागयोः ।
न ज्ञायन्ते यतस्तस्माच्छेदकज्ञानमुच्यते ॥ १ ॥

समभूदिङ्मध्यबिन्दोः सप्तवर्गाङ्गुलेन च ।
मानैक्यार्धेन वृत्तानां ग्राह्यार्धेन त्रयं लिखेत् ॥ २ ॥

तन्मध्यमं समासाख्यं बहिष्ठं वलनाश्रयम् ।
ग्राह्यमण्डलमध्यस्थं दिशः प्रागेव साधिताः ॥ ३ ॥

यत्प्राच्यां वलनं देयं तद्यथादिशमेव तु ।
पश्चाद्यत्तद्विपर्यस्तं वलनं प्राक्प्रसिद्धये ॥ ४ ॥

आद्यन्तमध्यवलनैस्त्रिभिरेवाखिलं भवेत् ।
निमीलनोन्मीलनाभ्यां न किञ्चिदपि नारद ॥ ५ ॥

विक्षेपाग्रे यतश्चन्द्रः परस्मादनुसृत्य तत् ।
प्राङ्मुखं मध्यवलनं तद्विक्षेपैकता यदि[1] ॥ ६ ॥

भेदे पश्चान्मुखं देयमिन्दोर्भानोर्विपर्ययात्[1] ।
सव्यापसव्यमार्गाभ्यां तथा तन्न्यासदर्शनात् ॥ ७ ॥

तिस्रो रेखामध्यबिन्दुं प्रापयेद्वलनत्रयात् ।
तत्समासयुतिभ्यां तु विक्षेपौ ग्रासमौक्षिकौ ॥ ८ ॥

वलनाभिमुखं बिन्दोः स्वविक्षेपं च मध्यमम् ।
विन्यस्य विलिखेच्चापं विक्षेपत्रितयाग्रगम् ॥ ९ ॥

3 *b*) Ba. वहिष्कं          *c*) $D_1$. ग्राह्यं

6 1) Compare सू. सि. VI 9
  *b*) Ba. -दविसृज्य; Be. $D_1$. -दनुसृज्य

7 1) Compare सू. सि. VI 9



इष्टच्छिन्नोनमानैक्यदलसम्मितयास्पदम् ।
शलाकया मध्यबिन्दोर्ज्ञात्वा चापं ततो लिखेत् ॥ १० ॥

ग्राहकार्धेन तद्बिम्बस्थानं चेत्स्पर्शमोक्षयोः ।
निमीलनोन्मीलनयोर्विद्याद्ग्रहणमीप्सितम् ॥ ११ ॥

अध्वान्तत्वाद्विधोः सूर्यग्रहणं कृष्णमेव तु ।
ध्वान्तं छादकमिन्दोर्यद्विशेषोऽस्ति विधौ ततः ॥ १२ ॥

धूम्रं कृष्णं क्रमात्कृष्णं कृष्णताम्रं विनिर्दिशेत् ।
किञ्चिदूनाधिकैः पादैश्छन्नं कपिलमेव तत् ॥ १३ ॥

न देयं यस्य कस्यापि रहस्यं शास्त्रमुत्तमम् ।
अर्थलुब्धाय मूर्खाय साहङ्काराशयपापिने[1] ॥ १४ ॥

गुरुभक्तिविहीनाय पुत्रायापि वदेन्न हि[1] ।
एतद्देयं सुशिष्याय मुने वत्सरवासिने ॥ १५ ॥

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
षष्ठोऽध्यायः ॥ ६ ॥

10 *a*) $D_2$. $B_1$. $B_2$. – च्छि –

14 1) Line missing in all texts except Ba.

15 1) Line missing in all texts excepl Ba.

# Appendix I

## (A)

Additional lines from S. after Adhyāya I

मौढ्यान्वितस्तत्परज्या यद्वा ज्या सकला अपि ।
ऋते षष्ठं सप्तमीं च प्राग्वज्याः स नवद्विपाः ॥ १ ॥

तल्लाभास्तु स्फुटज्यार्धं द्वितीयादि चतुष्टयात् ।
सप्तमानाङ्कृति द्वन्द्वा त्रयोदश चतुष्टतः ॥ २ ॥

कथ्यमान वि-साभिर्योज्याः शोध्यास्तदन्यतः ।
विश्वेकृतिश्च प्रकृतिः कृतिः प्रकृतिकुञ्जराः ॥ ३ ॥

दशतालोत्कृतिस्तत्वातिधृतिवह्निदिग्गजाः ।
गोगजेशंकृतात्यष्टिरन्ध्राग्निभूतिभास्कराः ॥ ४ ॥

आनुलोमेन विकलास्ताश्चेताः कीर्तिता मया ।
द्वितीयाद्यद्वयेष्टम्यां मार्गभेदोप्यदोषकृत् ॥ ५ ॥

त्रयोदशभिरन्त्याभिरन्योत्पत्तिश्च पूर्ववत् ।
एवं स्फुटी – ज्यापिण्डौ अपि कार्यक्षमा न हि ॥ ६ ॥

अनुपादात्सिद्धमिष्टं स्फुटजीवार्थपिण्डकैः ।
किञ्चिन्न्यूनाधिकं स्याच्च पृथगुक्तिर्न सम्मता ॥ ७ ॥

अतः सर्वानुगुण्येन कथ्यन्ते ज्यार्धपिण्डकाः ।
अधिकाः कियताः किन्तु नानापाताञ्च तद्विधा ॥ ८ ॥

पूर्वोक्तं प्रथमज्यार्थं प्रथमः खण्ड एव हि ।
प्रथमज्यार्धभक्तज्यां तस्याः खण्डादपोह्य च ॥ ९ ॥

भवेत्तत्परखण्डस्य स्वपूर्वज्या समन्वितः ।
अनन्तरज्यार्धखण्डश्चतुर्विंशश्च तेपि हि ॥ १० ॥

एकविंशाच्च विंशाच्च षष्ठात्पञ्चदशादपि ।
सप्तमाद्द्वादशात्सप्तदशाञ्चार्धोत्तरं मतम् ॥ ११ ॥

छेदार्धादधिकं छेद्यं नस्येदेकं फलं क्षिपेत् ।
प्रोज्झ्योत्क्रमेण व्यासार्धात्क्रमजीवार्धपिण्डकान् ॥ १२ ॥

उत्क्रमाज्ज्यार्धपिण्डास्युस्ते तद्व्यासार्धशेषिताः ।
तत्वनेत्रकलामानं जीवा सङ्ख्याप्रदर्शने ॥ १३ ॥

गतैष्यखण्डशेषघ्ना वर्तमानकलाहृताः ।
तत्वनेत्रैर्ग—न्खण्डान्प्रोज्झ्य खण्डस्वकस्फुटः ॥ १४ ॥

इति यो मनुते मोहात्सोन्त्यखण्डार्ध एव हि ।
व्यासार्धं न कलापादं लभते तदिदम्महत् ॥ १५ ॥

यदा तु प्रथमज्यार्धमर्धितं बाहुमौर्विका ।
व्यासार्धं सर्वदा कर्ण इति जाता तु कोटिजा ॥ १६ ॥

अधिका कोटिजीवाया युक्तिजायाः कियत्तया ।
त्रयोविंशो ज्यार्धपिण्डो बाहुजीवा यदा भवेत् ॥ १७ ॥

कोटिज्या प्रथमज्यार्धं कियतोनं तदा तथा ।
इयं च नासत्करणमिति मास्तु विचारणे ॥ १८ ॥

यदा छेदाद्याधिकच्छेदः कियतो नोधिकोपिनः ।
फलव्यतिक्रमो न स्यात्किञ्चिच्छेद्ये हराधिके ॥ १९ ॥

छेदो यदा स्यादेत्यल्पस्तदा स्यात्कलनं कियत् ।
बाहुकोटियुतौ भागनवतिश्चेद्द्वयं स्फुटम् ॥ २० ॥

दोःकोटि धनुषोरिष्टा नवतेः प्रोज्झ्य शेषजाः ।
जीवास्फुटस्याज्ज्याचापं नानुवादादतः सदा ॥ २१ ॥

अक्षभा विषुवत्कर्णसमश्रिज्याक्षमौर्विका ।
वर्द्धमाना यदा दोर्ज्या सा कोटिज्यात्र लम्बजा ॥ २२ ॥



क्षीयमाणो बाहुकर्णो वनिस्याद्वादशाङ्गुलम् ।
त्रिभज्या लम्बजीवा स्यात्तत्रिज्यैवोभयोः फलम् ॥ २३ ॥

प्रमाणं विषुवत्कर्णस्तद्भाशङ्कुश्च वांछिने ।
जीवा तस्याधिकं यत्तद्धनुः सर्वत्र तत्फलम् ॥ २४ ॥

अक्षांशोननवत्यंशजीवैव स्फटलम्बजा ।
स्फुटभूलक्षया भुक्तिर्देशान्तरफलं भवेत् ॥ २५ ॥

षष्टिनाड्यश्च तन्मध्ययोजने सम एव हि ।
स्वादिक्पतनहानान्तादर्वाक्तत्पश्चिमो घटि ॥ २६ ॥

वारप्रवृत्ति तन्मध्यादूर्ध्वं प्राच्यामवैहि तु ।
मेरुर्व्यक्षान्तरे मार्गे सर्वस्मिन्दक्षिणोत्तरे ॥ २७ ॥

वारप्रवृत्तिर्युगपत्तत् क्षपार्धाधिकैः कृतः ।
स्वदिक्पूर्मेरुमध्येया रेखा मद्यपदा हि सा ॥ २८ ॥

लङ्कास्वामि चकोराद्रिः सगरं वत्सगुल्मका ।
शाहितकमवन्ती च याम्ये मध्यपथे नरः ॥ २९ ॥

पश्चिमादौ सुचक्षुश्च भद्रा नद्यः सिता स्थिताः ।
निमीलनोन्मीलनाभ्यां सूत्रजाभ्यां विधोर्यदि ॥ ३० ॥

दृक्सिद्धमर्वाक् खस्थानं पश्चान्मध्यान्पथो भवेत् ।
ऊर्ध्वं प्राच्यां तयोर्मध्या नाड्यो देशान्तरभिधाः ॥ ३१ ॥

प्राच्यां प्रतीच्यां तास्वर्णमध्यरात्रे स्वके तथा ।
वारप्रवृत्तिर्लङ्कायां तयोस्तत्कालदर्शनात् ॥ ३२ ॥

संज्ञावन्तो गवासृष्टिश्चान्द्रमासा स्वसम्भवैः ।
अधिमासैर्युताश्चान्द्रतिथयो वर्तमानकाः ॥ ३३ ॥

सृष्टि स्वसिद्धोन रात्रैरूनवारौ वनानजः ।
सावनो द्युगणस्तस्मात्सूर्याद्या वासरेश्वराः ॥ ३४ ॥

व्रतः सावनमासाब्दा सप्तशिष्टं दिना हृताः ।
स्वैकस्य वर्तमानाद्य दिनाद्यान्विश्वतस्तथा ॥ ३५ ॥

गताहहीनो द्युगणो वर्तमानोब्दमासयोः ।
सवर्तमानाद्यदिनो बर्षमासेश्वरोर्कतः ॥ ३६ ॥

व्यर्थनाडीत्रयं वारः क्षणाख्यो नारसम्भवात् ।
तत्तत्पष्ठिस्तद्दिनेशात्कालहोरेश्वरः स्मृतः ॥ ३७ ॥

वारप्रवृत्तेर्नाड्यो वा द्विघ्नाः पञ्चगुणाधिकैः ।
ऊनाश्च वारपास्वस्मिन्नर्काद्वारेश्वराः क्रमात् ॥ ३८ ॥

अधिशेषात्फलपूर्णं यद्युगैकाधिमासकैः ।
दिनषष्ठ्यात्मकान्मासान्परमासपुरस्वकात् ॥ ३९ ॥

यन्मासान्ताधिशेषस्या चतुर्युग्यधिमासतः ।
हीनः स षष्ठिवारात्मा मासः पापशुभार्धसुक् ॥ ४० ॥

यदार्केन्दू समौ भाद्यैस्तदा मासस्तु चैन्दवः ।
पूर्णः स मध्यः शुद्धाख्यो मध्यशुद्धग्रहाद्वयात् ॥ ४१ ॥

मध्ये चान्द्रमसे मासे नास्ति मध्यार्कसङ्क्रमः ।
यत्रासावधिकः पापी शुभकर्मविनाशनः ॥ ४२ ॥

तस्मिन्कृताहश्राद्धादि परस्मिन्मासि भावि यत् ।
क्रीयते तद्यतस्व[illegible]ात्परमास स–मिधः ॥ ४३ ॥

यन्मासान्ते सङ्क्रमस्यान्मध्यार्कस्य स चाधिकः ।
शुद्धेन्दुमासे शुद्धार्कसङ्क्रान्त्या चैवमेव हि ॥ ४४ ॥

स सर्वमासं सत्कर्मनाशनं विद्धि नारद ।
द्युषष्टिकल्पना तत्र नास्ति यत्स स्वसंज्ञितः ॥ ४५ ॥

शुद्धेन्दुमासे शुद्धार्कसङ्क्रमद्वयमस्ति चेत् ।
शून्यमासः स विज्ञेयो न तत्र शुभमाचरेत् ॥ ४६ ॥



अह्ने नाम महापापं शून्यमासे शुभे कृते ।
जायतेऽहस्पतिः प्रोक्तं संज्ञाभेदेन चेतसः ॥ ४७ ॥

महायुगार्कमासादि शेषयोरन्तरात्फलम् ।
यद्युगाधिकमासेन सैकं शेषगतं पुनः ॥ ४८ ॥

तावान्मासो वर्तमाना दिनषष्ट्यात्मकः स तु ।
निःशेषजः फाल्गुनश्चेद्युद्धपापार्द्धयुक् क्रमात् ॥ ४९ ॥

युगचान्द्रतिथिभ्योपि क्षयशेषं विशोध्य च ।
शिष्टाच्च क्षयशेषाच्च युगत्रयदिनोद्धृतैः ॥ ५० ॥

दिनै गर्म्यगतोनाह्रा निर्दिशेदधिमासवत् ।
मध्यार्कशीतरश्मिभ्यां तिथिमध्या स्फुटान्यथा ॥ ५१ ॥

क्षयाहं सम्भवे द्वारे यस्मिन्मध्यतिथित्रयम् ।
वारान्ते मध्यतिथ्यन्तश्चेत्स चापि दिनक्षयः ॥ ५२ ॥

ईदृशी चेच्छुद्धतिथिः सा भवेदपमा मुने ।
वारत्रये शुद्धतिथिस्तत्रिद्युस्पृक्च त्रयं मुने ॥ ५३ ॥

शुभकर्म विनाशाय जायते नात्र संशयः ।
भूमिकक्ष्या द्वादशांश लङ्कायाः प्राक्तु शाल्मलेः ॥ ५४ ॥

मयाय प्रथमप्रश्ने सौरवाक्यमिदं भवेत् ।
उदयादुदयं भानोः सावनं तत्प्रकीर्तितम् ॥ ५५ ॥

सावनानि स्युरेतानि यज्ञकालावधिस्तु तैः ।
सूतकादिपरिच्छेदा दिनमासाब्दपास्तथा ॥ ५६ ॥

मध्यमग्रहभुक्तिश्च सावनेनैव गृह्यते ।
एतदेवापि सर्वत्र मन्यते यो भवेदिति ॥ ५७ ॥

स्यात्तपान्त्यत्रिभागेपि तस्या शौचगताहजम् ।
वारः प्रवृत्तिः प्राग्देशे क्षपार्धेभ्यधिके भवेत् ॥ ५८ ॥

तद्देशान्तरनडिभिः पश्चादूने विनिर्दिशेत् ।
इत्युक्तदिनमासाब्द परिप्रारम्भबोधकम् ॥ ५९ ॥

शास्त्रं निरर्थकं तस्य लङ्कायामर्धरात्रिकः ।
सावनो द्युगणश्चेति वाक्यं चापि निरर्थकम् ॥ ६० ॥

तदाद्यप्रश्नदोषेण द्वितीयोयं च दुष्यति ।
तृतीयः पौलिशः प्रश्नः चतुर्थस्तु तथैन्दवः ॥ ६१ ॥

पञ्चमो रौमशः षष्ठो गार्ग्यो जैवस्तु सप्तमः ।
अष्टमश्चापि वासिष्ठो माण्डव्यायोपपादितः ॥ ६२ ॥

वेदस्य चक्षुरेवं चेद्व्यर्था शाकल्यसंहिता ।
प्रश्नाष्टके दूषितेस्मिन् शिष्टप्रश्नशतं तथा ॥ ६३ ॥

विधिमन्त्रादि रूपं च केवलं तेन दूषितम् ।
अथैको दूषितो वेदस्तथान्ये मुनिसत्तम ॥ ६४ ॥

अनर्थैकाश्रयो भूयात्ततोसौ वेदनिन्दकः ।
यवकोट्युदयो वारप्रभवस्तत्र तन्मतः ॥ ६५ ॥

रात्रेरन्त्यत्रिभागादौ शाल्मलेसौ प्रवर्तते ।
सूतकादि परिच्छेदस्तथा तत्रापि गृह्यते ॥ ६६ ॥

त्रिष्वंशेष्वन्तिमो योंशः क्षपायाः सूतकादिषु ।
स युज्यतेहागम्येन सर्वत्रासौ गतेन हि ॥ ६७ ॥

न्यायोयं शाल्मले सोन्यत्रापि तावत्तथोच्यते ।
न्यायं सञ्चारयेद्यस्तु सर्वत्र मुनि पुङ्गव ॥ ६८ ॥

स एव शास्त्रतात्पर्यं सम्यग्वेद न हीतरः ।
प्रातःसङ्गममध्याह्नमपराह्नं यथाक्रमम् ॥ ६९ ॥

सायाह्नं सावनादह्नः पञ्चतुल्यविभागशः ।
सन्ध्या च पूर्वरात्रं च मध्यरात्रं तथा क्रमात् ॥ ७० ॥



कीर्त्यते पररात्रं च प्रत्यूषश्च क्षपांशकैः ।
रश्मिहीनानि धिष्ण्यानि यावद्यावद्दिवाकरः ॥ ७१ ॥

अरुणो यः प्रदोषश्च प्रभातस्तावदेव हि ।
यज्ञकालावधिस्त्वेतैर्यथायोग्यं विदुर्बुधाः ॥ ७२ ॥

उदयादुदयं चेति कल्पनैषा निरर्थका ।
दिवारात्रविभागैर्हि कल्प्यन्ते तानि नान्यथा ॥ ७३ ॥

मध्यमग्रहभुक्तेस्तु कल्पनैषा किमानहेत् ।
अवशेषाद्ग्रहोत्पत्त्यै सेति तात्पर्यमिच्छता ॥ ७४ ॥

यवकोट्युदयः साक्षादेव स्वीकृत इत्यपि ।
लौकिकव्यवहारं चेत्यदुयादुदयं दिनम् ॥ ७५ ॥

स्वकं चेन्मन्यते तद्धि शास्त्रस्य हृदयम्मुने ।
द्युगणात्भगणाद्याश्च जायन्ते मध्यमग्रहाः ॥ ७६ ॥

····पातावक्रिणस्तु पातांश्चक्राद्विशोधयेत् ।
स्वदिक्पुरस्वोदययोरन्तरं न समं सदा ॥ ७७ ॥

तत्प्राक्प्रत्यक्पुराभ्यां नो देशान्तरविधिर्मतः ।
स्वदिक्पुरस्वाक्षपार्धदिनार्धविवरे समे ॥ ७८ ॥

सदातो वागुदक्पुभ्यं देशान्तरविधिर्मतः ।
वारान्तकालिकाः प्राच्यां देशान्तरकलोनिताः ॥ ७९ ॥

प्रत्यग्युक्तास्तत्तद्देष्यकालः प्राक्प्राग्यतस्ततः ।
स्वमध्यतात्रजा याम्यादुत्तरात्स्वदिनार्धजा ॥ ८० ॥

तदा कृता भवन्त्येव चन्द्रपातोन्यथा कृतः ।
यावद्भिर्दिवसैरेको भगणो बहवोपि वा ॥ ८१ ॥

तैरिष्टशेषं स्वीकृत्य भगणन्तद्दिनोद्भवम् ।
तमेव प्रोज्झिष्टशेषादिष्टशेषैर्निबन्धनैः ॥ ८२ ॥

विभजन्नेव निःशेषं प्रसङ्ख्याय दिनानि च ।
एकाहभुक्त्यामिष्टेन हत्वा संयोज्य बन्धनैः ॥ ८३ ॥

इष्टैः शेषादतो तोर्धं लभतेत्यं ग्रहेपि वा ।
यदैक्यमिष्टमानै–मानं चेतिग्रहागमः ॥ ८४ ॥

इष्टेच्छायामिष्टमानं मानमन्यमितिः फलम् ।
मार्गलाघवमिच्छंस्तु फाल्गुनान्ते तिथौ कचित् ॥ ८५ ॥

मध्यग्रहानुच्चपातान् ज्ञात्वा धिक्षयथो स्थितिम् ।
चैत्रादि वाराद्युगणं ग्रहांस्तस्माच्छ्रदुत्रान्वितान् ॥ ८६ ॥

विद्यात्तद्युगणाद्वर्षमासयातदिनादिकात् ।
वर्षमासाधिपौ वर्षवासरान्मासवासरात् ॥ ८७ ॥

वर्षयातदिनाद्यद्वा वर्षाहान्मासवर्षपौ ।
ध्रुवजीवाब्दवर्षात्तु बार्हस्पत्याब्दमेव च ॥ ८८ ॥

राशीकृता गुरोः सृष्टिभगणैः पञ्चकाधिकाः ।
विजयाद्यास्तु सहिता राशिभिर्वर्तमानकैः ॥ ८९ ॥

गुरुयुक्तोदयास्तर्क्षाद्वैशाखादिषु च क्रमात् ।
कार्तिकादीनि वर्षाणि पौर्णमास्यां द्विजेथ हि ॥ ९० ॥

संवत्सरफलायोक्तं बार्हस्पत्याब्दमेव ते ।

इति श्रीशाकल्यसंहितायां द्वितीयप्रश्ने ब्रह्मसिद्धान्ते
द्वितीयोऽध्यायः ॥

(B)

मेधिभूतौ ध्रुवौ विप्रयो मेर्वोरुपरि स्थितौ ।
भचक्रं चुम्बकन्यायेनैव ताभ्यां दृढम्महत् ॥ १ ॥

चक्रवत्भानि तिष्ठन्ति समन्तादिति यत्ततः ।
भचक्रमिति वाङ्मात्रं न चक्रं तत्र नारद ॥ २ ॥

चक्रं चेदस्ति तन्मध्योयदेते तद्ध हिरात्मज ।
चुम्बकभ्रामकन्यायेनोच्चपातैश्चरन्ति न ॥ ३ ॥

ग्रहोच्चपाताश्चक्रेण भूभृदा ................ च ।
ब्रह्माण्डाधार शक्तिरभ्यां सकलं च तथा दृतम् ॥ ४ ॥

तद्ब्रह्माण्डसहस्राणां कोटिकोटिशतान्यपि ।
अयुतस्य सहस्राणि सान्तर्वस्तूनि भू मुने ॥ ५ ॥

तोयं यथाभिघातोत्थं बिभर्ति कणिकाशतम् ।
तथापो भूतेशगुणा भूषान्ता मुनिपुङ्गव ॥ ६ ॥

आपो दशगुणं तेजस्तेजो दशगुणो मरुत् ।
अग्निर्मरुद्दशगुणं नभश्च श्वसनं तथा ॥ ७ ॥

मायासंवलितब्रह्मण्याकाशं तिष्ठतीति च ।
ईश्वरः सशिराधारः सर्वमेतद्बिभर्ति हि ॥ ८ ॥

प्रवहाख्यो मरुत्तांस्तु ग्रहनक्षत्रतारकाः ।
तदाज्ञयैव पर्येति समन्ताद् भ्रामयन्मुने ॥ ९ ॥

केन्द्रं नाम ग्रहादुच्चग्रहमध्यं ग्रहादपि ।
रेखा चक्रार्धगमासः स धनुर्द्वयमध्यगा ॥ १० ॥

आत्तसज्य धनुर्द्वन्द मन्योन्यं मिश्रकोटिकम् ।
इव मध्यकराग्राभ्यां रेखाग्राभ्यां युतं हि तत् ॥ ११ ॥

उच्चात्तचापमध्यान्तौ बाहुकोटि तयोर्गुणौ ।
स्वीकार्यौ नोच्चतौ व्यासो ग्रहात्केन्द्रविरोधतः ॥ १२ ॥

यद्युच्चश्चापमध्यर्ध इति कल्पेत तद्ग्रहाः ।
सङ्गृह्य हस्तास्थानस्थामिति स्यादपकर्षति ॥ १३ ॥

वातरश्मिभिरुच्चानां ग्रहा नद्धा स्वदिङ्मुखम् ।
नेति स्यादपकृष्यन्ते नैतदिष्टां गतिं ययौ ॥ १४ ॥

देवमेरौ यथा सर्वे वसन्तोपि ग्रहा मुने ।
स्वस्वशक्त्यान्तरिक्षे च चेरुर्देशान्तरस्थया ॥ १५ ॥

शीघ्रोच्चा यावता चान्तस्तावतैव बहिर्गृहात् ।
पर्यटन्ति तथा यत्र क्षेत्रे तस्तत्र वै बहिः ॥ १६ ॥

बहिष्ठाः शीघ्रमन्दोच्चपाताख्या दृश्यरूपिणः ।
हेतवस्ते ग्रहगते गीर्वाणाः कालमूर्तयः ॥ १७ ॥

ग्रहस्योभयतस्त्रित्रिराशिस्थे बहिरुच्चके ।
ग्रहकक्ष्यां भजेदन्यत्रान्तः कक्षामियं स्थितिः ॥ १८ ॥

भुजज्याग्रहकक्ष्यायां षष्टिस्याद्यदि षड्गुणा ।
तात्कालिकायां कक्ष्यायां भुजज्यार्काश्चतुर्दश ॥ १९ ॥

द्वात्रिंशत्पञ्चमुनयः खाग्निदेवा विकर्तनाः ।
नवाब्दयोमीत्वो जान्ते त्र्यंशत्र्यंशत्रिबाहुभिः ॥ २० ॥

भूरेपेन्दुभिरूना स्युर्बाहुज्यानुगुणं क्रमात् ।
तथा शैघ्रे धाग्निदस्राक्षिविश्वेसप्ततिः कुजात् ॥ २१ ॥

व्युत्क्रतिर्गोग्नयस्ते च बीजान्ते बाहुजा वशात् ।
त्रिचन्द्रद्वयदृक्चन्द्रैरूना युक्ता शनिज्ययोः ॥ २२ ॥

यावानंशो भुजज्याया स्याद्भुजज्यात्र कोटिजा ।
कोटिज्ययास्तावतांशेनोना त्रिज्यायुतापि वा ॥ २३ ॥



चलकर्णस्तु ताभ्यां स्याद्ग्रहे यत्र चलत्यसौ ।
मण्डले तद्विशालार्थं मान्दे तद्बाहुमौर्विका ॥ २४ ॥

फलज्यास्यास्तु शैघ्रे सा चलकर्ण प्रमाणजा ।
त्रिज्यैव चलकर्ण स्यादिति छायां विशिष्यते ॥ २५ ॥

ग्रहात्प्राग्भगणार्थस्थ उच्चस्थमपकर्षति ।
तावत्प्राङ्मुखमन्यस्मिन्नर्थे पश्चान्मुखं तथा ॥ २६ ॥

नास्मिन्प्रवहवायुश्च ................ तेति यत ।
तदेवेत्युच्यते सौतं स्वोच्चाभिमुखमीरयेत् ॥ २७ ॥

स्वोच्चापकृष्टा भगणे प्राङ्मुखं यान्ति यद्ग्रहः ।
तत्तेषु धनमित्युक्तमृणं पश्चान्मुखेष्वतः ॥ २८ ॥

मध्यसंज्ञा ग्रहाः पञ्च भौमाद्यंशसमुद्भवाः ।
वर्तन्ते मध्यकक्षायां स्वीयाया सर्वदा समम् ॥ २९ ॥

ततः शीघ्रफलार्धेन तच्छीघ्रोच्चान्तरे पुनः ।
उच्चैर्नीचैः पञ्चचेरुः शीघ्रार्थाख्याः कुजादिजाः ॥ ३० ॥

ततो मन्दफलार्धेन तन्मन्दोच्चान्तरे पुनः ।
मन्दार्थादपकृष्यन्ते मन्दोच्चैस्तदुपग्रहाः ॥ ३१ ॥

यथा मन्दफलं मध्याद्ग्रहाश्चैतैस्तदा मुने ।
बुधभार्गवयोः पातौ समं तद्गच्छतः फलम् ॥ ३२ ॥

इतीह प्रथमप्रश्ने कल्पितं तदिहोच्यते ।
विक्षेपौ द्वौ तु शीघ्राख्यौ शीघ्रोच्चाभ्यां सहाटतः ॥ ३३ ॥

दक्षिणोत्तरयोः पातद्वयेन बुधशुक्रयोः ।
उपग्रहाभ्यांतौ बद्धावाकृष्येते यथा स्वयम् ॥ ३४ ॥

तौपातौ नो परौ तादृक्पातौ नोच्चसमाविव ।
तन्मन्दोच्चापकृष्टैस्तु ग्रहैर्जीं वार्कि भूसुतैः ॥ ३५ ॥

पर्यटन्ति त्रयः सार्धं तदीयाः कर्षकाभिधाः ।
मन्दापकृष्टभौमादीन्कर्षकाश्च स्वदिङ्मुखम् ॥ ३६ ॥

कर्षन्ति तत्तच्छीघ्रोच्चा यदा शीघ्रफलं मुने ।
आकृष्यमाणस्त ........ निजशी ........ भिः ॥ ३७ ॥

## Appendix II

( See Adh. II, St. 154 )

वर्णाष्टभिः कृतेन्द्रैश्च शून्यविश्वैर्गुणाष्टभिः ।
बाणेशैर्वक्रिणो भागैर्भमाद्या शीघ्रकेन्द्रगैः ॥ १ ॥

चक्राद्विशोधितैरेतैः शिष्टैरुज्झन्ति वक्रताम् ।
चतुर्थ केन्द्रभागैस्तैर्वक्रप्राप्तिवियोगयोः ॥ २ ॥

विकला स्याद्गतिर्विप्र कलाभावाद्यभुक्तिवत् ।
वक्रप्राप्तिवियोगाभ्यां प्राक्पश्चादन्वहं गतिः ॥ ३ ॥

उपचर्यतेष्टभिर्नाम्ना मृज्वेव क्रित्यलं द्वयम् ।
क्षीयमानो वर्धमाना चाल्पामथ गतेः क्रमात् ॥ ४ ॥

उक्तानुमन्दा मन्येति मध्या मध्यसमा यथा ।
मध्यघ्नाद्धीयमाणो वर्धमानात्क्रमाद्गतिः ॥ ५ ॥

केन्द्राद्यं तद्विभे शीघ्राश्चातिशीघ्रात्वनिश्चिते ।
मन्दा मन्दतरा शीघ्रा ............ तारेत्यृजुः ॥ ६ ॥

पञ्चधान्य त्रिधाशून्यवक्रा वक्रतरेति च ।
शीघ्रकर्णानुरूपं तु हानिवृद्धिगतागतिः ॥ ७ ॥

उपचर्यतेष्टभिर्नाम्ना मृज्वीव क्रित्यलं द्वयम् ।
मन्दातिमन्दाति वक्रौ वक्रा शून्यसमा न चेत् ॥ ८ ॥

शीघ्रातिशीघ्रेत्यष्टाभिर्नाम्ना किन्तु प्रयोजनम् ।
निरस्तिद्धं दुराशङ्का निश्चिता च ग्रहस्थितिः ॥ ९ ॥

साम्प्रतं वक्ष्यते पुत्र नक्षत्राणां स्थितिः परा।
वैश्वश्रवणयोर्मध्ये नक्षत्रमभिजित्तुवत्॥ १०॥

वैश्वान्ताद् श्रवणे त्रिपञ्चाशत्कलास्पदम्।
अभोगवद्देपि प्रोक्तं यत्राष्टौ विंशतिर्मता॥ ११॥

भानां तत्र यथा स्थानं गण्यते तु न सर्वदा।

# Appendix III

Symbolic words used for numerical figures
in astronomical works.

० — अभ्र, अम्बर, आकाश, ख, गगन, पूर्ण, बिन्दु, वियत्, शून्य.

१ — इन्दु, कु, आदि, भूमि, रूप, विष्णु, शशि.

२ — अक्षि, अश्विन्, दस्र, दोषन्, पक्ष, भुज, यम, यमल, लोचन.

३ — अग्नि, क्रम, गुण, ग्राम, पुर, राम, लोक, हुताशन.

४ — अब्धि, कृत, युग, वर्ण, वेद, श्रुति, समुद्र.

५ — अक्ष, अर्थ, इन्द्रिय, इषु, पाण्डव, बाण, भूत, विषय, शर.

६ — अङ्ग, ऋतु, तर्क, दर्शन, रस.

७ — अद्रि, अश्व, ऋषि, गिरि, धातु, नग, पर्वत, मुनि, शैल, स्वर.

८ — इभ, कुञ्जर, गज, मतङ्गज, मङ्गल, वसु, सर्प, सिद्धि.

९ — अन्तर, गो, ग्रह, अङ्क, छिद्र, नन्द, नभश्चर, विवर, निधि, रन्ध्र, सङ्ख्या.

१० — अवतार, आशा, दिश्, पङ्क्ति, रावणशिरस्.

११ — महेश्वर, रुद्र.

१२ — अर्क, आदित्य, मास, सूर्य.

१३ — विश्वेदेवाः.

१४ — इन्द्र, भुवन, मनु.

१५ — तिथि.

१६ — अष्टि, कला, नृप, भूप, राजन्.

१७ — अत्यष्टि, धन.

१८ — धृति.

१९ — अतिधृति.

२० — अङ्गुली, कृति, नख.

२१ — प्रकृति, मूर्च्छना.

२२ — आकृति, जाति.

२३ — विकृति.

२४ — जिन, सिद्ध.

२५ — तत्व.

२६ — उत्कृति.

२७ — भ, नक्षत्र.

३२ — दशन, द्विज, रद.

३३ — अमर, सुर.

४९ — तान.

(It is to be noted that synonyms of some of these words are also used in the same sense.)